

Wonder what her smile meant.
I'd walked up to her
and offered my pack
of fresh mint
bubble gum.
She popped
one in.
And she smiled .....




Was it my charm, or was it my bubble gum?




Fixy Foxy
Spearmint Bubble Gum

Dattaram NP 2E/86

# भावेषु विद्यते देवः

न देवो विद्यते काष्ठे
न पाषाणे न मृण्मये ।
भावेषु विद्यते देवः
तस्मात् भावो हि कारणम् ।।

जनाः चिन्तयन्ति यत् मूर्तिषु देवः अस्ति इति। किन्तु वस्तुतः काष्ठमयी मृण्मयी पाषाणमयी वा स्यात् नाम मूर्तिः, तत्र केवलं,देवः न निवसति। ताः मूर्तयः देवस्य प्रतीकानि। देवः तु सर्वव्यापी।

यत्र अस्माकं श्रद्धाभावः तत्र देवः भवति। एतया दृष्ट्या मूर्तिषु अपि देवः अस्ति यतः 'तत्र देवः अस्ति' इति जनानां भावः अस्ति।

देवः निर्गुणः निराकारः च। अतः तस्य न विशेषः आकारः, न वा विशेषः स्वभावः। किन्तु एतादृशं निराकारं तत्त्वं सर्वे मनसि स्थापयितुं न शक्नुवन्ति। तत्रापि अशिक्षिताः सामान्याः तु एतस्मात् भावतः सर्वथा दूरं तिष्ठन्ति। तेषां श्रद्धायाः कोऽपि आधारः न भवति। श्रद्धा यदा निराधारा तदा जीवनम् अपि अव्यवस्थितम्। अतः सामान्यानां हितदृष्ट्या देवपूजापद्धतिः व्यवहारे आनीता महात्मभिः। ते महात्मानः तावद्दाराः आसन् यत् स्वयं निर्गुणोपासकाः सन्तः अपि सगुणसाकारपूजाम् अङ्गीकृतवन्तः, तदर्थं देवमूर्तयः स्थापितवन्तः च।

प्रतीकानि प्रतीकानि एव, न कदापि देवाः ते। प्रतीकस्य तत्त्वस्य च भेदम् अजानन्तः बहवः प्रतीकम् एव देवं मन्यन्ते। कुत्रचित् वैपरीत्यं तावत् दृश्यते यत् केचन तत्त्वं सर्वथा विस्मृत्य प्रतीके एव सर्वात्मना लग्नाः भवन्ति।

स्मामी विवेकानन्दः वदति- "समाजे दीनानां हृदयेषु देवं पश्यतु। समाजदेवः भवतु" इति। समाजः अस्माकम् आराध्यदैवं भवेत्। यदा समाजे उपेक्षितबान्धवानां हृदयेषु देवं पश्यामः तदा सहजतया समाजे समरसता एकता इत्यादयः अभिवर्धन्ते। आन्तरिकभेदभावः सर्वथा नश्यति।

'मातृदेवो भव' 'पितृदेवो भवः' इत्यादीनि वाक्यानि प्रगतिपथस्य सोपानानि। प्रगतिः तु तदा एव भवति, यदा 'समाजदेवो भव' इति वाक्यम् अस्माकम् आदर्शः भवति।

# भवच्छब्दस्य प्रयोगः

शिष्यः - श्रीमन्! भवान् युष्मच्छब्दस्य स्थाने भवच्छब्दस्य प्रयोगं करोति। तद्विषये कदाचित् भवता उक्तं यत् - 'सरलतादृष्ट्या एवं करोमि' इति। एतस्य पृष्ठभूमिं ज्ञातुम् इच्छामि अहम्।

आचार्यः - वत्स! प्रथमं सरलतामनोभावस्य अर्थः ज्ञातव्यः भवता। यतः सरलता, कठिनता इत्यादयः सापेक्षाः शब्दाः।

शि - तन्नाम .....?

आ - 'रामः स्थूलः' इति अहं वदामि। तदा प्रश्नः उदेति - 'रामः कस्य अपेक्षया स्थूलः?' इति। रामः बलरामस्य अपेक्षया स्थूलः स्यात्। तथैव भीमस्य अपेक्षया कृशः अपि स्यात् किल?

शि - एवं तर्हि रामे स्थूलत्वं कृशत्वं च अस्ति एव। स्थूलः/कृशः इति कथनसमये मनसि किमपि मानं तिष्ठति।

आ - आम्, एवम् एव सरलतादयः अपि। मनसि किमपि मानं, तदाधारेण सरलतायाः कल्पनं, तदनुगुणं भाषायाः स्वरूपनिश्चयः च।

शि - एवं तर्हि किं मानम् अस्ति भवतः विचारे?

आ - भवान् जानाति एव यत् अहं सम्भाषणप्रचारान्दोलनस्य कार्यकर्ता इति। अल्पे समये सुलभतया संस्कृतसम्भाषणस्य पाठनं मम लक्ष्यम्। अतः पाठनसौलभ्यं मम एकं मानम्।

शि - तन्नाम युष्मच्छब्दस्य पाठनसौलभ्यं नास्ति इति वा भवतः अभिप्रायः?

आ - अहं कदा तथा उक्तवान्? मम आन्दोलनस्य अङ्गतया यत् पाठ्यते तत्र भवच्छब्दं स्वीकृत्य पाठनम् अधिकसौलभ्याय भवति, तदपि प्राथमिके स्तरे। द्वितीये तृतीये वा स्तरे युष्मच्छब्दस्य पाठनं भवति एव।

शि - प्रथमे स्तरे कीदृशं पाठनसौलभ्यं तस्य?

आ - ततः पूर्वं भवता Basic Samskrit विषये अपि किञ्चिदिव ज्ञातव्यम्। अल्पे समये अधिकं पाठनीयं, पाठितस्य दृढता सम्पादनीया इति हि अस्माकं लक्ष्यम्। दश शब्दाः पाठनीयाः इति चिन्तयतु। पञ्चानां शब्दानां पाठनेन एव यदि इष्टसिद्धिः तर्हि अवशिष्टाः शब्दाः न पाठनीयाः भवन्ति। तेन अभ्यासिनां पठनश्रमस्य सञ्चयः भवति।

शि - युष्मच्छब्दप्रयोगेन यः भावः प्रकाश्यते सः भावः भवच्छब्द-प्रयोगेन एव प्रकाशयितुं शक्यते?

आ - आम्। 'गच्छति' इति प्रथमपुरुषरूपं वयं पाठयामः एव। भवच्छब्दप्रयोगे क्रियापदरूपम् एतदेव भवति*। यथा - भवान् गच्छति, भवती गच्छति, भवान्/ भवती गच्छतु। इदानीं गच्छति - गच्छामि इत्यनयोः भेदः पाठितः चेत् इष्टसिद्धिः। तदपि सुकरम् एव। अहं - गच्छामि, इतरत्र सर्वत्र गच्छति इति। भूतकाले तु वयं कृदन्तरूपस्य आश्रयणं कुर्मः। भूतकृदन्तरूपस्य भवच्छब्दस्य साम्यम् अस्तीति कारणतः तत्रापि न क्लेशः।

शि - एवं युष्मच्छब्दस्य परिहारेण व्यवहारः कृतकः न भवेत् वा? किं माता पुत्रं भवच्छब्देन सम्बोधयेत्? किं यजमानः सेवकेन सह, स्नेहितः स्नेहितेन सह च भवच्छब्देन व्यवहरेत्?

आ - भवतः स्मरणे भवतु यत् युष्मच्छब्दः प्राथमिके स्तरे परिह्रियते, (तदपि पाठनसौलभ्यदृष्ट्या) न तु सर्वत्र इति। इदानीं भवतः प्रश्नः - व्यवहारः कृतकः भवेत् किल इति। आंग्लभाषायां सर्वत्र You इति प्रयोगः श्रूयते। हिन्दी भाषायाम् 'आप' इति प्रयोगः। किं तत्र कृतकता अनुभूयते भवता?

शि - इतरत्र क्रियते इति कारणतः अनुकरणम् अनुचितं किल?

आ - न हि एतत् अनुकरणम्**। पाठनसौलभ्यरूपः महान् लाभः अस्तीति कारणतः एषः मार्गः अनुसृतः। निरन्तरम् अभ्यासेन परस्परव्यवहारेण च कृतकता परिहृता भवेत्।

शि - एवं तर्हि सर्वत्र भवच्छब्दः प्रयोक्तव्यः?

आ - समर्थतया शीघ्रातिशीघ्रं संस्कृतोन्नतिः साधनीया चेत्, सर्वत्र संस्कृतस्य प्रसारः करणीयः चेत्, तदर्थं सरलं मुखम् आश्रयणीयं चेत्, पाठनसौलभ्यं मनसि चिन्तनीयं चेत् भवच्छब्दप्रयोगः आश्रयणीयः एव।

---

* भवद्योगे न मध्यमः।

** परिशीलयत् -

१. स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान् दर्शितशिष्यवृत्तिः - रघुवंशे २-४०.

२. किं पुनः अभिहितं भवत्या - (चेटीं प्रति भीमस्य वचनम्) - वेणीसंहारे प्रथमोऽङ्कः



# चन्दमामा

सप्टम्बर्-१९८६

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रु. २.५०

वार्षिकं ग्राहकशुल्कं रु. ३०.००

# चन्दमामा

संस्थापकः 'चक्रपाणिः'    सञ्चालकः 'नागिरेड्डिः'

संस्कृतज्ञानां संघटनार्थं तत्र तत्र प्रयत्नाः क्रियमाणाः दृश्यन्ते। बह्व्यः संस्थाः बहुभ्यः वर्षेभ्यः कार्यं कुर्वन्त्यः सन्ति। एवं तर्हि संघटनं किमर्थम्?

किं संघटनार्थं संघटनम्? सदस्यताशुल्कं सङ्गृहीतं चेत्, वार्षिकोत्सवः आचरितः चेत् किं संघटनस्य सार्थकता सिद्धा? न, कदापि न। संघटनं हि कार्यार्थं साधनम्। कार्ययोजना कापि न स्वीकृता चेत् संघटनायाः कोऽपि अर्थः एव नास्ति।

अस्माकं लक्ष्यम् उन्नतं स्यात्, उत्तमं स्यात्, अत्युत्कृष्टम् अपि स्यात्। किन्तु तस्य प्रयोजनं वयं तदा एव प्राप्तुं शक्नुमः यदा च योग्येन मार्गेण व्यवस्थितचिन्तनपूर्वकम् अग्रे गच्छामः। यदि आरब्धकार्यः कश्चित् असाफल्यम् अनुभवति तर्हि तत्र कारणं सामान्यतः अपरिष्कृतमार्गस्य आश्रयणम्।

कार्यपद्धतिः न हि एकस्य बुद्धिप्रतिभया रूपिता भवति। रूपिता अपि सा एकया व्यक्त्या समर्थतया अग्रे नेतुं न शक्या। अतः कार्यपद्धतेः रूपणार्थम् आरब्धस्य कार्यस्य समर्थतया निर्वहणार्थं च संघटनम् आवश्यकम्।

सम्पुटः-३    सप्टम्बर्-८६    सञ्चिका-६

प्रतिकृतिमूल्यं रु. २.५०    वार्षिकं ग्राहकशुल्कं रु. ३०-००






रसप्रश्नाः

# ग्रन्थानाम् एतेषां कः विषयः?

(अत्र केषाञ्चित् ग्रन्थानां नाम लिखितम् अस्ति। तेषां विषयविषये त्रयः विकल्पाः दत्ताः सन्ति। योग्यम् एकं चिन्वन्तु)

I वेणीसंहारः
१. 'वेणी' इत्यस्य राक्षसस्य संहारः
२. शत्रोः रक्तेन केशवेशरचनार्थं शपथः
३. वेण्याः अपहरणम्

II ऋतुसंहारः
१. ऋतूनां वर्णनम्
२. ऋतुनामकस्य संहारः
३. परिसरमालिन्यविषयकः ग्रन्थः

III हलायुधः
१. बलरामम् अधिकृत्य लिखितः ग्रन्थः
२. कश्चन प्रसिद्धः कोषः
३. आयुधानि अधिकृत्य लिखितः ग्रन्थः

IV खण्डनखण्डखाद्यम्
१. पाकशास्त्रग्रन्थः
२. सस्यशास्त्रग्रन्थः
३. अद्वैतविमर्शग्रन्थः

V समयमातृका
१. ज्योतिःशास्त्रग्रन्थः
२. स्त्रीशिक्षणसम्बन्धी ग्रन्थः
३. विडम्बनकाव्यम्

VI पीयूषलहरी
१. नर्मदास्तोत्रं विषयः
२. अमृतमन्थनं विषयः
३. गङ्गास्तोत्रं विषयः

उत्तराणि:– I-२, II-१, III-२, IV-३, V-३, VI-१.

# रसवार्ताः



## मशकनिवारकं सङ्गीतम्

माण्ट्रिलू नगरे एषु दिनेषु किञ्चन नूतनं यन्त्रं निर्मितम् अस्ति। अस्य यन्त्रस्य आरम्भकस्य पिञ्जस्य नोदनेन वयं किमपि सङ्गीतं श्रोतुं न शक्नुमः। किन्तु तस्मात् यन्त्रात् उत्पद्यमानात् ध्वनितः मशकाः तु दूरं धावन्ति।

## अद्वितीया वृद्धवनिता

जपानूदेशीयः १२० वर्षीयः वृद्धः एषु दिनेषु मृतः इति कारणतः ब्रिटनूदेशीया ११२ वर्षीया वृद्धा इदानीम् अद्वितीयत्वं प्राप्तवती।





## पुस्तकानि एव उपकारीणि

एषु दिनेषु दूरदर्शन (Television) द्वारा विद्याबोधनम् आरब्धम् अस्ति। "श्रव्यदृश्यसाधनैः अध्ययनं यत् क्रियते तस्य अपेक्षया पुस्तकद्वारा अध्ययनम् एव श्रेष्ठं, यतः पुस्तकद्वारा अधीतम् एव छात्राः विशेषतः स्मरन्ति" इति संशोधनेन ज्ञातम् अस्ति।

## फलादीनाम् अन्वेषणार्थं यन्त्रम्

पेटिकासु वस्तुसमूहे वा अक्रमरूपेण फलानि सस्यानि च यत् नयन्ति तस्य अन्वेषणार्थं किञ्चन साधनम् अमेरिकादेशे अन्विष्टवन्तः सन्ति।



# कचः

देवदानवयोः मध्ये दीर्घकालं यावत् युद्धं प्रवृत्तम्। युद्धे मृतान् राक्षसान् शुक्राचार्यः मृतसञ्जीविनीमन्त्रेण उज्जीवयति स्म। अतः देवाः राक्षसान् पराजेतुं न शक्तवन्तः। अतः ते 'मृतसञ्जीविनीविद्याम् अभ्यस्य आगच्छतु' इति उक्त्वा देवगुरोः बृहस्पतेः कुमारं कचं शुक्राचार्यसमीपं प्रेषितवन्तः।

कचः शुक्राचार्यस्य शिष्यः सन् विनयेन विधेयतया च गुरुशुश्रूषां कुर्वन् गुरोः प्रीतिं सम्पादितवान्। शुक्राचार्यस्य पुत्री देवयानी कचविषये प्रीतिमती अभवत्। कचस्य आगमनस्य उद्देश्यं ज्ञात्वा राक्षसाः तस्य मारणार्थं प्रयत्नम् आरब्धवन्तः। कदाचित् कचः अरण्ये होमधेनूं रक्षन् आसीत्। तदा राक्षसाः तं मारितवन्तः। वृक्षे शवं बद्धवन्तः च। एतां वार्तां श्रुत्वा शुक्राचार्यः सञ्जीविनीमन्त्रेण कचम् उज्जीवितवान्। राक्षसाः न हताशाः। ते पुनः कदाचित् कचं भस्मीकृत्य, भस्म जले योजयित्वा शुक्राचार्याय पायितवन्तः।

शुक्राचार्यः ज्ञानदृष्ट्या राक्षसैः कृतां वञ्चनां ज्ञातवान्। उदरे स्थितं कचम् उज्जीव्य सञ्जीविनीमन्त्रस्य उपदेशं कृतवान्। कचः शुक्राचार्यस्य उदरं भित्त्वा बहिः आगत्य, मृतं गुरुं सञ्जीविनीविद्यया उज्जीवितवान्। गुरोः अनुज्ञां प्राप्य प्रतिगच्छन्तं कचं देवयानी "मां परिणयतु" इति प्रार्थितवती।

"भवती गुरुपुत्री। तत्रापि अहं भवत्याः पितुः उदरतः एव बहिः आगतवान्। अतः अहं सोदरसमानः। आवयोः परिणयः धर्मविरुद्धः भवेत्" इति वदन् कचः देवयान्याः प्रार्थनां निराकृतवान्।

एतेन वचनेन कुपिता देवयानी 'मृतसञ्जीविनीविद्या भवतः उपकाराय न भवतु' इति शापं दत्तवती। कचः तु- "एतस्याः विद्यायाः उपयोगः मम न भवेत्। किन्तु अहं देवान् बोधयिष्यामि। ते एतस्य उपयोगं प्राप्स्यन्ति" इति उक्त्वा देवलोकं गतवान्।





# उदारमनस्कता

रायपुरग्रामस्य पार्श्वे काचित् नदी प्रवहति। तस्यां नद्यां स्नानं पुण्यप्रदम् इति जनानां विश्वासः। द्वादशवर्षेषु एकवारं प्रचलतः कुम्भमेलनामकस्य उत्सवस्य दिने लक्षशः जनाः एतं ग्रामम् आगच्छन्ति। दशदिनं यावत् प्रचलतः एतस्य उत्सवस्य सन्दर्भे ग्रामीणानां परमसन्तोषः। सर्वेषां गृहेषु तदा बान्धवानां कोलाहलः।

दशरथः रायपुरवासी कश्चन कृषिकः। तस्य पुत्री सुमतिः। उत्सवसन्दर्भे एव सुमत्याः जन्मदिनोत्सवः अपि आगतः। तद्दिने दशरथस्य पत्नी पतिम् उक्तवती- "अन्धकारप्रसारतः पूर्वम् एव गृहम् आगच्छतु। आगमनसमये सौचिकापणतः सीवनार्थं दत्तं पुत्र्याः वस्त्रम् अपि आनयतु। तदेव वस्त्रं धृत्वा सा मन्दिरं गन्तुम् इच्छति। ग्रामे तु जनानां महान् कोलाहलः। विलम्बं न करोतु" इति।

दशरथः यदा सौचिकापणं गतवान् तदा वस्त्रं न सिद्धम् आसीत्। दशरथं किञ्चित्कालम् उपवेश्य तदा एव सज्जीकृत्य दत्तवान् सौचिकः। तत्स्वीकृत्य दशरथः यदा गृहं प्रति प्रस्थितः तदा अन्धकारः प्रसरन् आसीत्। यावता वेगेन गतं चेत् अपि गृहप्राप्तौ विलम्बः जातः एव।

दशरथः गृहं यावत् प्राप्तवान् तावता कश्चन विंशतिवर्षीयः युवकः गृहस्य पृष्ठभागस्य द्वारतः विना शब्दं चोरः इव भीत्या परितः पश्यन् पलायमानः आसीत्। तं दशरथः इतःपूर्वं कदापि न दृष्टवान् आसीत्।

भीतिपूर्णं तदीयं व्यवहारं विवर्णं मुखं च दृष्टवतः दशरथस्य मनसि संशयः उत्पन्नः। एषः कश्चन चोरः एव स्यात् इति निश्चितवान् सः।

अतः धावन् गत्वा तस्य बाहुं दृढं गृह्णन्- "कः भवान्? गृहतः किं चोरितवान्? सत्यं

वदतु। अन्यथा प्राणैः विमुक्तः भवेत्" इति कठोरं गर्जितवान्।

अकस्मात् प्रवृत्तया एतया घटनया सः युवकः दिग्भ्रान्तः जातः। किमपि स्पष्टं वक्तुं न शक्तवान् सः। दशरथः तस्य पृष्ठभागे मुष्ट्या प्रहरन् पुनः गर्जितवान्- "रे चोर! सत्यं वदतु। भवता चोरितानि वस्तूनि कुत्र?" इति।

दशरथस्य उच्चध्वनिं श्रुत्वा तस्य पत्नी पुत्री च बहिः आगतवत्यौ। पार्श्वगृहस्थाः अपि तत्र सम्मिलिताः।

"युवकः दृढकायः एषः श्रमेण कार्यं कर्तुम् अनिच्छन् चौर्ये प्रवृत्तः अस्ति। पादप्रहारेण सम्यक् पूजनीयः एषः। एतं सत्कारं सः जन्मनि कदापि न विस्मरेतु। किमपि दयादाक्षिण्यं मास्तु?" इति उक्तवान् कश्चित्।

"प्रथमं किं चोरितवान् इत्येतत् द्रष्टव्यम्" इति उक्तवान् अन्यः। दशरथः तस्य वस्त्रेषु परिशोधनं कृतवान्। तदा कोषे कानिचन रूप्यकाणि लब्धानि। अन्यत् किमपि न लब्धम्।

सः युवकः नमस्कृत्य दीनभावनया उक्तवान्- "भोः, अहं चोरः न। कृपया मां त्यजन्तु" इति।

"एषु दिनेषु बालापहारकाः सन्ति इति श्रूयते। उत्सवसमयः इति कृत्वा बालान् अपहर्तुम् आगतवान् स्यात् एषः" इति उक्तवती काचित् स्त्री।

समूहतः द्वौ अग्रे आगत्य उक्तवन्तौ- "एषः किमर्थम् आगतवान् इति एतस्य



मुखतः एव आनाययामः" इति।

तदा युवकः उक्तवान्- "भोः, तिष्ठन्तु तावत्। एतस्य गृहस्य देवप्रकोष्ठे स्थितं रक्तवर्णीयं स्यूतं प्रथमम् आनयन्तु अत्र" इति।

सुमतिः झटिति अन्तः गत्वा रक्तवर्णीयं स्यूतं बहिः आनीतवती। तस्य स्यूतस्य अन्तः केवलं रजतनाणकानि आसन्। एषः स्यूतः अत्र कथम् आगतः इति न ज्ञातवान् दशरथः।

तदा युवकः आत्मनि धैर्यं पूरयन् उक्तवान्- "भोः, एतस्मिन् स्यूते कानिचन रजतनाणकानि सन्ति। एतं स्यूतम् अहम् एव गृहस्य अन्तः स्थापितवान्" इति।

सर्वे तं युवकम् आश्चर्येण पश्यन्तः आसन्। दशरथः धनस्यूतस्य स्थापनार्थं किं कारणम् इति अनुरोधपूर्वकं पृष्टवान्। तदा युवकः एवम् उक्तवान्-

द्वादशवर्षेभ्यः पूर्वम् एषः युवकः यदा बालः आसीत् तदा सः ज्वरपीडितः अभवत्। बालं परीक्ष्य वैद्यः उक्तवान् यत् नगरं नीत्वा विशेषचिकित्साव्यवस्था करणीया इति। बालस्य पितुः हस्ते तावत् धनं नास्ति। चिकित्साव्यवस्था न कृता चेत् बालः मरणं प्राप्नुयात्।

पितुः कश्चन बाल्यस्नेहितः पार्श्वग्रामे आसीत्। 'सः निश्चयेन साहाय्यं कुर्यात्' इति चिन्तयन् पिता तस्य समीपं गतवान्। सः स्नेहितः कुम्भमेलोत्सवार्थम् रायपुरं गतवान् इति तस्य गृहे उक्तवन्तः। स्नेहितस्य अन्वेषणं कुर्वन् पिता रायपुरम् आगवान्।





सायङ्कालपर्यन्तम् अन्वेषणे कृते अपि स्नेहितः न मिलितवान्।

अनन्योपायः पिता ग्रामं प्रतिगन्तुम् इच्छन् पिपासानिवारणार्थम् एकस्य गृहस्य द्वारम् अङ्गुल्या ताडितवान्। गृहिणी द्वारम् उद्घाट्य पानार्थं जलं दत्त्वा पुनः द्वारपिधानं कृतवती।

एवं पिपासां निवार्य यावत् मार्गं प्रविष्टवान् तावता तेन कान्त्या प्रकाशमानं किञ्चन वस्तु दृष्टम्। तच्च वज्रखचितम् अङ्गुलीयकम् आसीत्। 'पुनः अपि द्वारशब्दं कृत्वा यममानाय एतत् अङ्गुलीयकं ददामि' इति एकवारं चिन्तितवान् पिता। किन्तु अपरक्षणे पुत्रस्य तीव्रम् अस्वास्थ्यं स्मरन् अङ्गुलीयकं कोषे स्थापयित्वा गृह गतवान्।

अङ्गुलीयकस्य विक्रयणेन प्राप्तेन धनेन पुत्रं नगरं नीत्वा विशेषचिकित्साव्यवस्थां कारितवान् पिता। अङ्गुलीयकप्राप्त्या पुत्रः प्राणापायतः मुक्तः अभवत्। पुत्रः आरोग्यशाली जातः।

युवकः एतत्सर्वं दशरथाय निवेद्य उक्तवान् - "अनन्तरकाले मम पिता भवतां ऋणस्य प्रत्यर्पणार्थं बहुधा प्रयत्नं कृतवान्। किन्तु तेन तत् न शक्तम्। गतमासे सः तीव्रम् अस्वस्थः अभवत्। मरणतः पूर्वं सः प्रवृत्तं सर्वं निवेद्य उक्तवान् यत् मम उत्तरक्रियार्थं विशेषव्ययं न करोतु। गृहे इदानीं शतं रूप्यकाणि सञ्चितानि सन्ति। इतोऽपि शतं रूप्यकाणि सङ्गृह्य भवते ददातु इति। वस्तुस्थितिं वदामि चेत् भवान् मम पितरं चोरं मन्येत, अथवा अङ्गुलीयकं मदीयं न आसीत् इति वदन् धनं तिरस्कुर्यात् इति सन्देहेन अहं चोरः इव भवतः गृहं प्रविश्य देवप्रकोष्ठे धनस्यूतं स्थापयित्वा आगतवान्। पितुः अन्तिमेच्छायाः पूरणम् एव मम लक्ष्यम् आसीत्" इति।

नमस्कारपूर्वकं सर्वं निवेदयतः युवकस्य प्रामाणिकतां श्रुत्वा सर्वे आश्चर्यचकिताः अभवन्।

"ज्येष्ठाः एतदर्थम् एव वदन्ति यत् सहसा विदधीत न क्रियाम् इति। वस्तुस्थितिं ज्ञात्वा चौर्यस्य आरोपणं करणीयम्, न तु अविचार्य" इति वदन्तः दशरथं निन्दन्तः जनाः ततः गतवन्तः।

युवकः ततः प्रस्थितवान्। दशरथः पुत्र्याः

हस्ततः धनस्यूतं स्वीकृत्य ताम् उक्तवान्- "अद्य भवत्याः जन्मदिनं खलु? समये एतत् धनं प्राप्तम्। एतेन धनेन एकं सुवर्णहारं कारयिष्यामि" इति।

तदा तस्य पत्नी उक्तवती- "सुवर्णहारः मास्तु। अल्पवयस्कायाः एतस्याः शरीरे सुवर्णहारस्थापनम् अपायकारि एव। एतेन धनेन मह्यम् सुन्दरं सुवर्णवलयद्वयं कारयतु" इति।

सुमतिः पितुः हस्ततः धनस्यूतं स्वीकुर्वती- "इदानीं मम किं वयः?" इति पितरं पृष्टवती।

"किमर्थम् इदानीं वयोजिज्ञासा? अद्य भवत्याः नवमवर्षं पूर्णं भवति। भवती दशमे वर्षे पादार्पणं करोति" इति उक्तवान् दशरथः।

"एषः युवकः यत् धनं दत्तवान् तत् द्वादश वर्षपूर्वकालीनम्। एतस्य गृहस्य क्रयणानन्तरं मम जन्म जातम्। एतेन सिध्यति यत् तत् अङ्गुलीयकम् एतं गृहं विक्रीतवतः रामचन्द्रस्य इति। वृद्धस्य तस्य सेवाम् इदानीं तदीयाः पुत्राः सम्यक् न कुर्वन्ति। रामचन्द्रः तु इदानीम् अस्वस्थः। सः कष्टपरिस्थितौ अस्ति। वस्तुतः एतद्धनं तदीयम् एव, इदानीम् महते उपकाराय भवेत् अपि। अतः एतत्क्षणे एव तस्मै एतं स्यूतं दत्त्वा आगमिष्यामि" इति उक्त्वा सुमतिः ततः गन्तुम् उद्युक्ता।

दशरथः तस्य पत्नी च आत्मनः पुत्र्याः दयागुणं दृष्ट्वा नितरां सन्तुष्टौ। माता आनन्दाश्रूणि मुञ्चन्ती पुत्रीम् प्रीत्या आलिङ्ग्य- "एतद् धनं रामचन्द्राय श्वः दातुम् अर्हति भवती। इदानीं देवमन्दिरं गत्वा आगच्छाम" इति उक्तवती।

"अद्य देवदर्शनं न कृतं चेत् न काऽपि हानिः। वृद्धाय रामचन्द्राय एतत् धनं दत्तं चेत् द्विगुणितं पुण्यं सम्पादितं भवेत्" इति उक्त्वा सुमतिः रामचन्द्रस्य गृहं प्रति धावितवती।

अल्पवयस्कायाः अपि पुत्र्याः उदारमनस्कतां दृष्ट्वा मातापितरौ अतीव सन्तुष्टौ।





# धैर्यशाली

पूर्वं नारायणपुरे कश्चन भूस्वामी आसीत्। तस्य अधीने अनेके सम्पद्भरिताः ग्रामाः आसन्। एकस्मिन् वर्षे कृषिकाः भूस्वामिने देयं करं न दत्तवन्तः। भूस्वामी स्वसहायकं नारायणस्वामिनं पृष्टवान् - 'इदानीं किं करणीयम्?' इति।

"श्रीमन्! कृषिकाः करभागं स्वयं दद्युः इति प्रतीक्षा न करणीया। यदि एकवारं कृषिकाणां मनसि 'विलम्बेन दत्तं चेत् अपि चिन्ता नास्ति' इति भावना आगच्छति तर्हि ते नियन्त्रणरहिताः भविष्यन्ति। अतः इदानीम् अस्माभिः स्वयं गत्वा कस्मिंश्चित् ग्रामे करसङ्ग्रहः करणीयः। तदा इतरग्रामेषु कर्मकरान् प्रेषयामः चेदपि करसङ्ग्रहः भविष्यति। अथवा ते एव स्वयम् आनीय दद्युः अपि" इति उक्तवान् नारायणस्वामी।

नारायणस्वामिनः उपायम् अङ्गीकृतवान् भूस्वामी। अनन्तरदिने सः चतुर्भिः भटैः सह करसङ्ग्रहार्थं प्रस्थितवान्।

सप्ताहात्मके अवधौ अनेकेषु ग्रामेषु अटित्वा ते करसङ्ग्रहं कृतवन्तः। अनन्तरं चत्वारः भटाः इतरग्रामान् गत्वा 'दिनत्रयाभ्यन्तरे करः न दत्तः चेत् परिणामः विपरीतः भवेत्' इति कठोरं सूचयित्वा आगतवन्तः।

भटाः सङ्गृहीतं धनं चतुर्धा विभज्य स्यूते बद्धवन्तः। भूस्वामी अश्वम् आरुह्य अग्रे प्रस्थितवान्। भटाः धनग्रन्थिम् उन्नीय भूस्वामिनम् अनुसृतवन्तः।

सूर्यास्तसमये ते एकस्य ग्रामस्य समीपम् आगतवन्तः। ग्रामस्य पार्श्वे एकः सरोवरः आसीत्।

ग्रामस्य परिस्थितिं जानन् भूस्वामी उक्तवान् - "इदानीम् एव अन्धकारः व्याप्तः अस्ति। समीपस्थे ग्रामे कोऽपि धनिकः सज्जनः नास्ति। एषः कुग्रामः। अत्र

अस्माकं भोजनादीनां व्यवस्था किं, अस्माकम् अश्वेभ्यः तृणानि अपि न लभ्यन्ते। अतः अहं साक्षात् मम प्रासादम् एव गच्छामि। भवन्तः किं कुर्वन्ति? आगच्छन्ति, उत अत्रैव तिष्ठन्ति?" इति।

तदा भटेषु अन्यतमः उक्तवान्- "श्रीमन्! वयम् आदिनं भारवहनेन नितरां श्रान्ताः स्मः। अतः अद्य रात्रौ अत्रैव कुत्रापि वृक्षस्य अधः शयनं कुर्मः। किमपि खादित्वा निद्रां समाप्य प्रातः शीघ्रम् एव तत्र आगच्छामः" इति।

"अस्तु तावत्। यथा इच्छन्ति तथा कुर्वन्तु। धनस्यूतानां विषये जागरूकाः भवन्तु" इति जागरूकतावचनानि उक्तवान् भूस्वामी।

भूस्वामिनः गमनानन्तरं भटाः कस्यचित् वृक्षस्य अधः वस्तूनि स्थापितवन्तः। स्वेच्छया सम्भाषणं कुर्वन्तः अग्निं ज्वालयित्वा पाकं कृत्वा भोजनं कृतवन्तः। चतुरः धनस्यूतान् मध्ये स्थापयित्वा तान् परितः शयनं कृतवन्तः च।

अल्पे एव काले तेषु अन्यतमः सुन्दरेशः गाढनिद्रायां मग्नः अभवत्। इतरे भटाः तस्य परिहासं कुर्वन्तः किञ्चित्कालं यापितवन्तः। अन्ते 'प्रतियामम् एकैकेन जागरूकतया स्थित्वा धनस्यूतानां रक्षणं करणीयम्' इति परस्परं निश्चयं कृतवन्तः। अत्रान्तरे पर्णैः आवृतस्य तस्य वृक्षस्य उपरिभागे कश्चन शब्दः श्रुतः। सर्वेषां हृदयेषु कम्पनम्



उत्पन्नम्।

त्रयः अपि कातरदृष्ट्या उपरि दृष्टवन्तः। विकीर्णकेशः कृष्णवर्णीयः कश्चन आकारः वृक्षतः अवतरन्- "कियत् धैर्यं भवताम्? मम वृक्षस्य अधः अग्निं प्रज्वाल्य आकण्ठं भुक्त्वा सुखं शयनं कुर्वन्ति किल?" इति कर्कशस्वरेण उक्तवान्।

भयङ्कराकारस्य एतस्य दर्शनेन त्रयः भटाः अपि भीताः। 'जीवन् भद्राणि पश्यति' इति चिन्तयन्तः ते भीत्या आक्रोशनं कुर्वन्तः पतन्तः उत्तिष्ठन्तः च ततः वेगेन धावितवन्तः।

गाढनिद्रायां मग्नः सुन्दरेशः कोलाहल शब्देन जागरितः अभवत्। इतरभटानां

पलायनकारणम् अजानन् सः परितः दृष्टिं प्रसारितवान्। विकीर्णकेशं भयङ्करं पिशाचं दृष्ट्वा तस्य निद्रा सर्वथा लुप्ता।

भीत्या धाविताः त्रयः अपि भूस्वामिनः प्रासादं गत्वा प्रवृत्तं सर्वं भूस्वामिने निवेदितवन्तः।

"भवन्तः सर्वे भीरवः" इति तान् तर्जयन् भूस्वामी अन्यैः चतुर्भिः भटैः सह सरोवरपार्श्वे स्थितस्य तस्य वृक्षस्य समीपं गतवान्। तेषां प्राप्तिसमये रात्रिः अपगता आसीत्।

तत्र तैः दृष्टं यत् - सुन्दरेशः हस्तद्वयम् अपि विशालतया प्रसार्य धनस्यूतान् दृढम् आलिङ्ग्य स्थितः अस्ति इति।

भूस्वामी सुन्दरेशस्य धैर्येण सन्तुष्टः। तम् उत्थाप्य तस्मै शतं सुवर्णनाणकानि पारितोषिकरूपेण तत्रैव दत्तवान्। धनस्यूतैः सह प्रासादं प्रत्यागतवान्।

धावनपूर्वकं प्रत्यागतानां सेवकानां द्वारा पिशाचवृत्तान्तः सर्वत्र प्रसृतः आसीत्। यदा सुन्दरेशः गृहं प्राप्तवान् तदा तस्य पत्नी पृष्टवती आश्चर्येण - "भवान् एतावद्-धैर्यशाली अस्ति इति अहम् अद्य ज्ञातवती" इति।

"मम धैर्यं कियत् इति अहं जानामि, सः पिशाचश्च जानाति। इतरे त्रयः भटाः पिशाचं दृष्ट्वा धावितवन्तः, यतः तेषां तावद् वा बलम् आसीत्। पिशाचदर्शनेन मम बलं तु सर्वथा लुप्तम्। अहं मूर्च्छां गतवान्। प्रातः भूस्वामी यदा आगत्य उत्थापितवान् तदा एव अहं जागरितः अभवम्" इति उक्तवान् सुन्दरेशः।

"एवं वा!" इति आश्चर्येण उद्गारं प्रकटयन्ती सा उक्तवती - "भवतः धैर्यस्य कथा भवता, पिशाचेन, मया च ज्ञायते। एतेभ्यः चतुर्थः एतत् रहस्यं कदापि न जानीयात्। यदि कश्चित् जानीयात् तर्हि अस्माकं गौरवम् अपगच्छेत्। अतः भवान् कमपि न वदतु। अहम् अपि न वदामि। पिशाचः तु कमपि न वदेत् एव। एवं च अस्माकं मानं सुरक्षितं तिष्ठतु" इति।






३

(मन्त्री सेनापतिः च चित्रसेनं विचित्रभवनस्य अन्तः नीतवन्तौ। भवने राजोचितं सकलसौविध्यम् आसीत्। अनन्तरदिने चित्रसेनः स्वपितरं तारकेश्वरमहाराजं स्वभवनं प्रति आनायितवान्। 'यदा आवश्यकता भवति तदा भवान् निस्सङ्कोचं मम साहाय्यं प्रष्टुम् अर्हति' इति पुत्रम् उक्त्वा तारकेश्वरः प्रतिगतवान्। तदनन्तरम्.....)

पितुः आगमनेन चित्रसेनः अतीव सन्तुष्टः आसीत्। पितुः निर्गमनानन्तरम् अपि सः बहुकालं यावत् द्वारे एव स्थितः आसीत्। अनन्तरं मन्त्रिसेनानायकादिभिः सह मन्दं गच्छन् स्वभवनं प्रविष्टवान्।

भवनस्य पुरतः केचन पौराः राजदर्शनार्थं स्थिताः आसन्। चित्रसेनं दृष्ट्वा ते- "महाराज! भवता रक्षणीयाः वयम्। एतावत्पर्यन्तम् अरण्यवासी उग्राक्षराक्षसः तत्सहचराः च अस्माकं पशून् केवलं नयन्ति स्म। इदनीं तु मनुष्याः अपि अदृश्याः भवन्तः सन्ति। उग्राक्षराक्षसतः कथञ्चित् अस्मान् रक्षतु" इति वदन्तः आक्रन्दनम् आरब्धवन्तः।

उग्राक्षस्य नामश्रवणेन चित्रसेनस्य सर्वाङ्गेषु कम्पनम् उत्पन्नम्। अपरक्षणे अन्तःस्थितः क्षात्रभावः अपि जागरितः अभवत्।



परस्परवार्तालापः आरब्धः। चत्वारः पौरनायकाः अग्रे आगत्य उक्तवन्तः- "महाराज! पशून् उन्नीय गच्छन्तम् उग्राक्षम् अत्र बहवः दृष्टवन्तः सन्ति। तत्सहकारिणः अपि पशून् नयन्ति। विरोधः आचरितः चेत् गर्जनया एव अस्मान् मूर्च्छावस्थां प्रापयन्ति। मानवापहरणं वस्तुतः केनापि न दृष्टम्। नरभक्षकाः राक्षसाः एव किल मानवान् अपहरेयुः? अतः एव वयम् उग्राक्षस्य कार्यम् एतत् इति उक्तवन्तः" इति।

पौरनायकानां वचनैः चित्रसेनः न तृप्तः। 'उग्राक्षस्य सहचराः पशूनाम् अपहारकाः भवेयुः नाम। किन्तु ते एव मानवान् अपि अपहरन्ति इत्यत्र किं प्रमाणम्? यः उग्राक्षः मम पुत्रम् उपायनरूपेण पृष्टवान् सः नरभक्षकः न स्यात् एव। सहचराः तु स्वयजमानानुगुणं व्यहरन्ति।'

"अस्तु तावत्। भवन्तः इदानीं निश्चिन्ततया स्वग्रामं गच्छन्तु। दिनद्वयाभ्यन्तरे उग्राक्षस्य पीडा यथा न भवेत् तथा व्यवस्थां करिष्यामि। इतःपरम् एतद्विषये चिन्ता मास्तु" इति आश्वासनं दत्तवान् चित्रसेनः।

"इदानीम् अहम् असहायकः न। ममैव एकं राज्यं राजपरिवारः सैन्यबलं च अस्ति। प्रजापालनं मम कर्तव्यम्। प्रजापीडकः य कोऽपि भवेत् नाम। केनाऽपि उपायेन सः मारणीयः एव। सः उग्राक्षः एव चेदपि तस्य मारणे न सङ्कोचः। राक्षसानाम् अपि काचित् नीतिः, कश्चन न्यायमार्गः च भवति एव।"

"भवतां पशून् परिवारजनान् च उग्राक्षः एव नयति इत्यत्र किं प्रमाणम्? कोऽपि प्रत्यक्षतः दृष्टवान् वा? तस्य निवारणे केनापि प्रयत्नः कृतः वा? तस्य बलं कियत्? एतादृशविषयेषु अहं पूर्णविवरणम् इच्छामि" इति उक्तवान् चित्रसेनः।

एतैः प्रश्नैः पौराणां समूहे

चित्रसेनस्य वचनं श्रुत्वा मन्त्री समीपम् आगत्य रहसि उक्तवान्- "उग्राक्षविषये गुप्तचरद्वारा अस्माभिः अपि विशेषवार्ताः प्राप्ताः। सः अतीव भयङ्करः इति तु सुप्रसिद्धम्" इति।



चित्रसेनः मन्त्रिणः वचने विशेषलक्ष्यं न स्थापयन् भवनस्य सोपानमार्गेण गच्छन्- "राक्षसः सहजतया भयङ्करः एव। किन्तु सः यदि प्रजानां धनं प्राणान् च अपहरेत् तर्हि प्रजापालकः किं मौनं तिष्ठेत्? काऽपि प्रतिक्रिया प्रदर्शनीया एव। प्रथमं मया अस्माकं बलं ज्ञातव्यम्। सेनानायकः कुत्र? आह्वयतु तम्" इति उक्तवान्।

अनुसरणं कुर्वन् आगतः सेनापतिः चित्रसेनस्य वचनं श्रुत्वा त्वरया पुरतः आगत्य- "उपस्थितोऽस्मि महाराज! आज्ञापनीयः अयं जनः। किं करणीयं मया?" इति पृष्टवान्।

"अस्माकं सेना कथम् अस्ति? सैनिकाः युद्धविद्यायां सम्यक् शिक्षिताः किल? सैनिकानां धैर्यसाहसादिषु कोऽपि लोपः न स्यात् किल? आयुधानि युद्धोपयोगस्थितौ सन्ति वा?" इति पृष्टवान् चित्रसेनः।

सेनानायकः आश्चर्यं प्रकटयन्- "एवं किमर्थं पृच्छति महाराज? अस्माकं सेनायाः विषये एकम् एव वचनं पर्याप्तं यत् एते सैनिकाः आज्ञामात्रेण पर्वतम् अपि चूर्णीकृत्य उन्मूलयितुं समर्थाः" इति उक्तवान्।

"पर्वतं तु सामान्याः कर्मकराः अपि चूर्णीकुर्युः। किं तत्र सैनिकानां वैशिष्ट्यम्? अनिवार्यता आगता चेत् अस्माकं सैनिकाः उग्राक्षं सम्मुखीकृत्य सधैर्यं युद्धं कर्तुं शक्नुवन्ति वा? इति एतावत् अहं ज्ञातुम् इच्छामि। इदानीं वदतु - अस्माकं सैनिकाः कथं सन्ति?" इति किञ्चित् असमाधानेन पृष्टवान् चित्रसेनः.

उग्राक्षस्य नामश्रवणेन एव सेनानायकस्य सर्वाङ्गे कम्पनम् उत्पन्नम्। सः कम्पमानस्वरेण पृष्टवान्- "महाराज! उग्राक्षः घोरः राक्षसः। तस्य सम्मुखीकरणम् ...."

सेनानायकस्य वाक्यं मध्ये स्थगयन् चित्रसेनः हसन् उक्तवान्- "सेनापते! उग्राक्षस्य नामश्रवणेन भवान् एव एवं भीतः। एवं तर्हि सैनिकानां का वा कथा स्यात्? अस्तु तावत्। सेनाशिबिरं कुत्र अस्ति इति वदतु। अहम् एव सर्वं परिशीलयिष्यामि" इति।

सेनापतिः चित्रसेनेन सह गच्छन्

पश्चिमदिशम् अनुसृतवान्। किञ्चिद्दूरं गत्वा गमनं स्थगयन् अनतिदूरे लघुपर्वतशिखराणां मध्ये स्थितं गुल्मैः आवृतं प्रदेशं प्रदर्शयन् उक्तवान्- "महाराज! तत्र पश्यतु। अस्माकं सैनिकाः शिबिरनिर्माणार्थं भूमिं समीकुर्वन्तः सन्ति" इति।

तत्र सहस्रसङ्ख्यया सैनिकाः सम्मिलिताः आसन्। एकैकः अपि कुद्दाल-खनित्रादीन् स्वीकृत्य भूमिं समतलां कर्तुं प्रयतमानः आसीत्।

तान् सैनिकान् दृष्ट्वा चित्रसेनः चिन्तितवान्- "मम न केवलं धनशक्तिः, अपि तु जनशक्तिः सैनिकशक्तिः च अपि पर्याप्तमात्रेण अस्ति। अतः अहं वस्तुतः महाराजः एव" इति। एतत्सर्वस्य प्राप्त्यै कारणीभूतं सिद्धयोगिनं कृतज्ञतापूर्वकं पुनरपि स्मरन् भक्त्या शिरः अवनमय्य स्थितवान्।

"राक्षसानां विरुद्धं सेनायाः उपयोगः विवेकपूर्णं कार्यं तु न। अतः एतद्विषये सगम्भीरं चिन्तनीयम्" इति निवेदितवान् मन्त्री।

"राक्षसैः सह युद्धे सैनिकाः प्रेरणीयाः इति मम उद्देशः न। यतः मनुष्याणां राक्षसानां च सामर्थ्ये अजगजान्तरभेदः अस्ति इति अहं जानामि एव। अहं प्रथमम् उग्राक्षेण सह वार्तालापं करिष्यामि। अनन्तरं किं करणीयम् इति निर्णेष्यामः" इति मन्त्रिणम् उक्त्वा सेनानायकं पृष्टवान्- "सः उग्राक्षः कुत्र निवसति इति भवान् जानाति वा?" इति।



"गुप्तचराणां द्वारा तस्य उग्राक्षस्य वसतिस्थानं तु ज्ञातम् एव। सः अभेद्ये दुर्गे निवसति। किन्तु महाप्रभो! विना साहाय्यम् एकाकिना ....." इति वदन् सेनानायकः वचनम् अर्धे स्थगितवान्।

"अहम् एकाकी उग्राक्षस्य दुर्गं न प्रविशामि। मार्गप्रदर्शनार्थम् आगताः सैनिकाः मया सह भवन्ति एव। यदि इच्छति, भवान् अपि आगन्तुम् अर्हति। किन्तु आगन्तव्यम् एव इति अनुरोधः तु नास्ति" इति हसन् चित्रसेनः उक्तवान्।

"तथा किमर्थं वदति महाराज! भवदर्थम् एव मम अस्मत्सैनिकानां च प्राणाः रक्षिताः सन्ति" इति उक्तवान् सेनानायकः।

अनन्तरं चित्रसेनः कैश्चित् सैनिकैः सेनानायकेन च सह उग्राक्षस्य निवासं प्रति प्रस्थितवान्। राक्षसस्य दुर्गं पूर्वं ये दृष्टवन्तः ते सैनिकाः मार्गं प्रदर्शयन्तः अग्रे गतवन्तः। एवं निरन्तरं गच्छन्तः ते मध्याह्नसमये उग्राक्षस्य पर्वतस्य समीपम् आगतवन्तः।

पर्वतस्य उपत्यकायां परिवारेण सह आगच्छन्तं चित्रसेनं केचन राक्षसाः दूरतः एव दृष्टवन्तः।

अत्यानन्देन अट्टहासं कुर्वन्तः ते उच्चस्वरेण- "अहो! हो! नरमानवाः!! कियद्बुद्धिमन्तः एते! अस्माकं यजमानस्य आहारः भवितुम् एतावद्दूरं स्वयम् आगताः !" इति उद्गारं प्रकटितवन्तः।

राक्षसान् दृष्ट्वा चित्रसेनः गम्भीरस्वरेण उक्तवान्- "भो भोः! भवतां, यजमानं





अरण्ये स्थितस्य भवनस्य नामश्रवणेन राक्षसाः भीताः इव।

"महाप्रभो! क्षाम्यतु अस्मान्। भवतः विषयं अस्माकं नायकः सूचितवान् अस्ति। भाविमहाराजं भवान् दास्यति इत्यपि तेन सूचितम्। इत इतो देवः ....। अस्माकं नायकः दुर्गस्य अन्तः अस्ति" इति वदन्तः ते राक्षसाः चित्रसेनं तत्परिवारसदस्यान् च पदे पदे नमन्तः मार्गं प्रदर्शयन्तः अग्रे गतवन्तः।

उग्राक्षस्य दुर्गरूपिगृहम् अतीव विचित्रम् आसीत्। अरण्ये स्थितं पर्वतं खनित्वा दुर्गं निर्मापितवान् आसीत् चित्रसेनः। मुखद्वारम् अखण्डशिलया निर्मितम् आसीत्। दुर्गं तथा विशिष्टरीत्या निर्मितम् आसीत् यत् मानवः किं, समर्थः राक्षसः अपि तत् वशीकर्तुं न शक्नोति स्म। अन्तः गतं चेत् बहिः आगन्तुं मार्गः न ज्ञायते स्म।

निवेदयन्तु यत् चित्रसेनः आगतवान् अस्ति इति। अहम् अस्मि चित्रसेनः" इति।

चित्रसेनस्य वचनं श्रुत्वा पुनः अपि अट्टहासं कुर्वन्तः राक्षसाः- "मनुष्याणां सर्वेषां मांसस्य रुचिः समाना एव। कः तत्र भवतः मांसे विशेषः? अहो! वेषभूषस्य व्यवहारस्य च परिशीलनेन भवान् राजा इव भाति। कः देशः? किं नामधेयं भवतः?" इति पृष्टवन्तः।

"अहम् अस्मि महाराजः चित्रसेनः। चतुर्योजनदूरे अरण्यस्य मध्ये स्थितः प्रासादः मम वसतिः। औद्धत्यस्य एषः न समयः। गत्वा उग्राक्षं निवेदयन्तु यत् चित्रसेनः आगतः अस्ति इति" इति कोपमिश्रितस्वरेण उक्तवान् चित्रसेनः।

चित्रसेनः एतं विचित्रं दुर्गं पश्यन् आश्चर्यम् अनुभवन् यावत् मुखद्वारं प्रविष्टवान् तावता उग्राक्षस्य विकटाट्टहासः श्रुतः। सः द्वारस्य अभिमुखतया उन्नते शिलासने उपविष्टः आसीत्।

"अहो हो! स्वागतं चित्रसेनाय! आगच्छतु। यं भवान् दास्यामि इति उक्तवान् आसीत् सः ज्येष्ठपुत्रः कुत्र?" इति पृच्छन् चित्रसेनः सर्वान् परिशीलितवान्।

तदा चित्रसेनः पृष्टवान्- "उग्राक्ष! भवतः बुद्धिः स्वाधीना अस्ति किल? सप्ताहतः पूर्वं

किल अहं वचनं दत्तवान्? एतावता एव अष्टादश वर्षाणि अतीतानि इति चिन्तयति वा भवान्? किं भवतः दृष्ट्या घण्टाः वर्षायन्ते वा?" इति।

चित्रसेनस्य वचनं श्रुत्वा उग्राक्षः पुनः अपि अट्टहासं प्रदर्शयन् उक्तवान्- "यदा बुद्धिः स्वाधीने तिष्ठति तदा अपि राक्षसः मानवानां कृते भयङ्करः एव। तस्य बुद्धिः यदि भ्रष्टा स्यात् तर्हि सः मानवजातिम् एव नाशयेत्" इति।

"एवं तर्हि न जानामि, भवतः बुद्धिः एषु दिनेषु कथम् अस्ति इति। यतः मम राज्यस्य जनाः प्रतिदिनं राक्षसैः नाश्यमानाः सन्ति" इति उक्तवान् चित्रसेनः।

"भवतः राज्यम्?" - आश्चर्येण पृष्टवान् उग्राक्षः।

क्षणकालानन्तरम् अङ्गीकारपूर्वकं शिरः चालयन्- "अहो! उग्राक्षस्य एतत् समग्रम् अरण्यराज्यम् इदानीं भवदीयम् एव। पूर्वं तु नर्मदानद्याः तीरे स्थितं धवलगिरिं विना अन्यत्सर्वं मदीयम् एव आसीत्। चतुर्योजनविस्तीर्णं समृद्धं राज्यम्! इदानीं तत्सर्वं भवदीयम् एव" इति मन्दहासपूर्वकम् उक्तवान्।

"मम भवनं परितः स्थितेषु ग्रामेषु निवसतः जनान् भवतः अनुचराः पीडयन्तः मारयन्तः च सन्ति। तेषां पशून् अपहरन्ति च। एषु दिनेषु मानवनाम् अपहरणम् अपि




श्रुतम्। पूर्वं यत् वचनं दत्तम् आसीत् तद्विरुद्धम् आचरन् अस्ति भवान्। 'भवतः राज्यपालने अहं हस्तक्षेपं न करोमि' इति उक्तं वचनं विस्मृतवान् भवान्" इति उक्तवान् चित्रसेनः।

चित्रसेनस्य वचनेन उग्राक्षः निरुत्तरः जातः। किं वक्तव्यम् इति चिन्तयन् शिलाखण्डम् एकं स्वीकृत्य उपरि क्षिपन् गृह्णन् च- 'सर्वे कृपया शिलापीठेषु उपविशन्तु' इति निवेदितवान्।

अनन्तरं चित्रसेनं पश्यन्- "चित्रसेन! भवान् अन्यथा गृहीतवान्। अस्मिन् प्रदेशे प्रचलतः मानवापहरणस्य कारणं न अहं, न वा मम सहचराः" इति उक्तवान्।

"किं वदति भवान्? भवतः सहचराः

मानवपीडकाः न इति भावं मयि उत्पादयितुम् इच्छति वा भवान्?" इति कोपेन पृष्टवान् चित्रसेनः।

"मम सहचराः मानवान् सर्वथा न पीडयन्ति इति अहं न वदामि। कदाचित् विशेषसन्दर्भे उत्सवे जन्मदिनोत्सवे वा कञ्चित् खादितवान् स्यात् कश्चित्। किन्तु इदानीं मानवापहरणं यत् प्रचलति तत्र कारणम् अन्ये एव। ते राक्षसानाम् अपेक्षया क्रूराः। तेषां स्वरूपं क्रौर्यं वा किमिति वदामि अहम्? भवान् इतःपूर्वं ज्वालाद्वीपस्य नाम कुत्रापि श्रुतवान् वा?" इति पृष्टवान् उग्राक्षः।

"तन्नामकः द्वीपः कश्चन अस्ति वा? एतद्विषये मया इतः पूर्वं कदापि न श्रुतम्" इति आश्चर्येण उक्तवान् चित्रसेनः।

"एवं तर्हि अद्य रात्रौ भवान् सहचरैः सह अत्रैव निवसतु। मध्यरात्रे ते क्रूराः एतेन मार्गेण एव ग्रामप्रदेशं गच्छन्ति। तान् प्रदर्शयामि अहम्। यद्यपि ते बलेन राक्षसैः समानाः, किन्तु तेषां वाहने वैशिष्ट्यम् अस्ति। विचित्रम् मृगम् आरुह्य आगच्छन्ति ते। ते मृगाः पक्षिणः इव आकाशे उड्डयनं कुर्वन्ति। एतेषां मृगाणां वेगस्य निवारणे वयम् अपि असमर्थाः। तथापि वयम् एतेन मार्गेण गच्छन्तं कञ्चन मृगारोहिणम् उपायेन बन्धितवन्तः। किन्तु दौर्भाग्येन सः अनन्तरदिने एव मृतः; भवान् तस्य अस्थिपञ्जरं द्रष्टुम् इच्छति चेत् मया सह आगच्छतु" इति उक्तवान् उग्राक्षः।

"केवलस्य अस्थिपञ्जरस्य दर्शनेन किं वा प्रयोजनम्? सजीविनः तान् दुष्टान्, तेषां वाहनानि च द्रष्टुम् इच्छामि अहम्। अनन्तरम् आवश्यकं चेत् तत् अस्थिपञ्जरं परिशीलयिष्यामि अहम्" इति उक्तवान् चित्रसेनः।

'तथैव अस्तु' इति भावं शिरश्चालन पूर्वकं सूचितवान् उग्राक्षः।

(अनुवर्तते)






# धर्मः अधर्मः च

अत्यन्तक्लिष्टस्य प्रश्नस्य अपि समाधानम् उक्त्वा स्वीयशिरसः रक्षणं कुर्वन् राजा त्रिविक्रमः पुनः वृक्षस्य समीपं गत्वा, शाखायां लम्बमानं शवम् अधः अवतार्य, स्वीयभुजे आरोप्य, श्मशानं प्रति मौनं गन्तुम् आरब्धवान्। तदा शवान्तर्गतः वेतालः वक्तुं प्रवृत्तः "भोः महाराज, प्रत्येकस्मिन् प्रयत्ने अपि वैफल्यम् एव प्राप्नोति। तथापि आग्रहशैथिल्यम् अकृत्वा एतस्यां रात्रिवेलायां श्मशाने इतस्ततः अटन्तं भवन्तं दृष्ट्वा आश्चर्यचकितः अस्मि। भवतः एतादृशः क्लेशानुभवः परान् उपकर्तुं वा अपकर्तुं वा इति अहं न जानामि। एतस्मिन् लोके धर्माधर्मयोः विश्लेषणं कर्तुं धर्मसूक्ष्मं ज्ञातुं च सर्वे समर्थाः न भवन्ति। कदाचित् उत्तमः हानिम् अनुभवति। दुष्टः लाभं प्राप्नोति। तदा तदा एतादृशप्रसङ्गान् वयं पश्यामः। द्वयोः वणिजोः क वन प्रसङ्गः, एतस्य उदाहरणरूपः स्मरणपथं प्रविष्टः अस्ति। तं

## वेतालकथा

प्राप्नुवन्ति। एतदर्थम् अवश्यम् अहम् उपायं वक्तुं शक्नोमि। भवत्पौत्रं मम समीपं प्रेषयतु" इति उक्तवान्।

पद्मनाभस्य आदेशानुसारं वज्रनाभः महायोगिनं द्रष्टुं गतवान्। यदा सः योगिनं नमस्कृतवान् तदा योगी आशीर्वचनानि उक्त्वा "वत्स, इतः समीपे एव वर्तमानस्य अरण्यस्य मध्ये वराहगिरिनामकं स्थानम् अस्ति। तत्र एकस्यां देवगुहायां हरितवर्णीयाः शिलाः सन्ति। तादृशीम् एकां शिलां यः सर्वदा स्वसमीपे स्थापयति, सः सम्पद्भरितः भवति। सः यत् यत् स्पृशति, तत्सर्वं सुवर्णं भवति। किन्तु तां शिलां यः आनयति, सः सत्प्रवर्तनम् एव मित्रं जानीयात्। सद्व्यवहारं प्राणसदृशं मत्त्वा, सत्यनीतिधर्मादिकम् अवलम्ब्य प्रामाणिकभावेन तेन वाणिज्यं करणीयम्। भवान् एतादृशः अस्ति चेत्, तां शिलां प्राप्तुं शक्नोति। भवतः पितामहः मां बहुधा प्रार्थितवान्। अतः एतद्रहस्यं भवन्तं वदन् अस्मि" इति उक्तवान्।

एतत् वचनं श्रुतवतः वज्रनाभस्य महान् सन्तोषः जातः। एतत् कार्यार्थम् आत्मना सह आगन्तुं सत्यपालः एव योग्यः इति सः जानाति।

अतः एव वज्रनाभः सत्यपालस्य समीपं गत्वा "एकं मुख्यं कार्यम् उद्दिश्य आगतवान् अस्मि। वाणिज्यं कुर्वन् अहं बहूनि पापानि कृतवान्। तेषां पापानां परिहारार्थं सत्प्रवर्तकेन वणिजा सह वराहगिरिं गत्वा, तत्र गुहायां वर्तमानस्य भगवतः विग्रहस्य पुरतः स्थित्वा साष्टाङ्गनमस्कारः





प्रसङ्गं कथयामि। तस्य श्रवणेन आयासशमनम् अपि भवति खलु?" इति उक्त्वा सः कथाम् आरब्धवान्।

कस्मिंश्चित् नगरे सत्यपालः वज्रनाभः च इति द्वौ वणिजौ आस्ताम्। सत्यपालः धार्मिकः प्रामाणिकः च। न्यायमार्गेण एव वाणिज्यं कुर्वन् कोटीश्वरः जातः आसीत्।

वज्रनाभः तु स्वीयवाणिज्ये धनसम्पादनम् एव प्रधानं मन्यमानः, धनलाभार्थम् अत्यन्तनीचकार्यम् अपि सलीलं करोति। परेषां कष्टादयः तस्य मनोरञ्जनविषयाः आसन्। अतः नगरवासिनः सर्वे तस्मात् सर्वदा भीताः भवन्ति स्म।

वज्रनाभस्य पितामहः पद्मनाभः पौत्रस्य प्रवृत्तिं न सहते। सः अतीव दुःखम् अनुभवन् बहुवारं पौत्रं वज्रनाभं हितम् उपदिशति। किन्तु वज्रनाभः "पितामह, अहं वाणिज्यधर्मम् एव सम्यक् पालयन् अस्मि। वाणिज्ये लाभचिन्तनम् एव प्रधानम्। तदेव अहम् अनुसरन् अस्मि। मम व्यवहारे अधर्मः किञ्चित् अपि नास्ति" इत्येव साधयति।

"किन्तु वत्स, मानवधर्मः अपि अस्ति किल? सः धर्मः वाणिज्यधर्मम् अतिरिच्य शोभते। भवान् तं न गणयति। मम वचनं शृणोतु, भवान् सत्यपालम् अनुकरोतु। सः अपि भवत्सदृशः वणिक् एव खलु?" इति पद्मनाभः तदा तदा पौत्रं जागरयति स्म। किन्तु वज्रनाभः किमपि न शृणोति।

अन्ते पद्मनाभः नगरतः बहिः एकस्मिन् आश्रमे वसतः कस्यचित् महायोगिनः समीपं गत्वा, स्वपौत्रस्य सर्वव्यवहारान् निवेद्य "स्वामिन्, सः परलोके स्वीयदुष्टकर्मणां किं फलं प्राप्नुयात् इति तु अहं न जानामि। किन्तु एतस्मिन् एव जन्मनि यदा कदाचित् सः महतीं हानिं प्राप्स्यति इति मम भीतिः। तं परिवर्तयितुं यः कोऽपि उपायः अस्ति चेत्, कृपया वदतु!" इति प्रार्थितवान्।

महायोगी किञ्चित्कालपर्यन्तं मनसि आलोच्य, "नगरे सत्यपालनामकः वणिक् भवतः पुत्रवत् वाणिज्यं कुर्वन् एव कोटीश्वरः जातः अस्ति। तथापि अन्ये वणिजः वर्जनाभम् एव अनुसर्तुम् इच्छन्ति। किमर्थम् इति चेत्, वाणिज्यं कर्तुम् अधर्ममार्गः एव सुलभतरः। वज्रनाभे परिवर्तनं भविष्यति चेत् अनेके वणिजः सन्मार्गम् अनुसर्तुं प्रेरणां



करणीयः। महायोगिना उक्तं रहस्यम् एतत्। भवान् साहाय्यं करोति चेत्, मम पापपरिहारः भविष्यति। कृपया भवान् मया सह तावत्पर्यन्तम् आगच्छति वा?" इति पृष्टवान्।

वज्रनाभे उत्तमपरिवर्तनस्य चिह्नं दृष्ट्वा सत्यपालः सन्तोषं प्राप्य एतस्य साहाय्यं करणीयम् इति निश्चितवान्। द्वौ अपि प्रयाणम् आरब्धवन्तौ। दिनचतुष्टयं यावत् कष्टकरं प्रयाणं कृत्वा, अरण्यस्य मध्ये स्थितं वराहगिरिशिखरं प्राप्य, तत्रत्यां गुहां प्रविष्टवन्तौ।

गुहायां घनान्धकारः आसीत्। तयोः अन्तः प्रवेशसमनन्तरम् एव "कः तत्र?" इति महान् शब्दः श्रुतः। उत्तरक्षणे एव महतः शिलाखण्डस्य पतनेन गुहायाः द्वारं पिहितम् अभवत्।

भीत्या वज्रनाभस्य मुखं शुष्कं जातम्। तस्य वाक्शक्तिः एव नष्टा।

सत्यपालः यथाकथञ्चित् धैर्यम् अवलम्ब्य, गम्भीरस्वरेण "आवां भगवतः दर्शनार्थम् आगतवन्तौ। आवाम् आयुधरहितौ। अन्तः कः अस्ति?" इति पृष्टवान्।

"तर्हि समीचीनम्। मां द्रष्टुम् इच्छा अस्ति वा? आगच्छताम्" इति वदतः कस्यचित् हासध्वनिः अपि श्रुतः।

उत्तरक्षणे एव गुहायाम् अन्धकारः निवारितः। प्रकाशः व्याप्तः। तस्मिन् स्वच्छप्रकाशे पुरतः स्थितं भयङ्कराकारम् एकं तौ दृष्टवन्तौ। द्वयोः अपि सर्वाङ्गेषु कम्पनम् उत्पन्नम्।

किञ्चित्कालानन्तरं सत्यपालः पुनः धैर्यं साधयित्वा "अयि भोः, इदं दैवक्षेत्रम् इति मत्त्वा आगतवन्तौ। भवान् कः? एतस्यां गुहायाम् एवंरीत्या किमर्थं वसति? भवतः कृते आवाभ्यां कर्तुं शक्यः कोऽपि उपकारः अस्ति वा?" इति पृष्टवान्।

भयङ्कराकारः अतिभयङ्करं हसन् एतस्यां गुहायां हरितशिलाः सन्ति। ताः शिलाः यस्य समीपे सन्ति, तस्य हस्ततः सुवर्णोत्पत्तिः भवति। अर्हस्य हस्ते ताः शिलाः दास्यामि चेत्, उत्तरक्षणे एव मम एतत् भयङ्कररूपं नश्यति। एतावदेव। अत्र

अन्यः कोऽपि देवः नास्ति" इति उक्तवान्।

"एताः हरितशिलाः प्राप्तुम् अर्हः कः?" इति पृष्टवान् सत्यपालः।

"उत्तमगुणः एव अपेक्षिता अर्हता" इति उक्तवान् भयङ्कराकारः।

वज्रनाभः सन्तोषेण "अहम् उत्तमः। अतः एव एतं मया सह आनीतवान् अस्मि। अतः हरितशिलां प्राप्तुम् अपेक्षिता अर्हता मयि एव अस्ति। कृपया मह्यं ददातु" इति पृष्टवान्।

"न हि, भवान् न उत्तमः। अनेकानि दुष्टकार्याणि कृतवान् अस्ति। सीतानामिकायाः दरिद्रायाः दशसहस्रमूल्ययुतं सुवर्णं गृहीत्वा, तस्यै भवान् शतदीनारान् एव दत्तवान्। एतावता अलं वा? इतः अपि भवतः अन्यकर्माणि वक्तव्यानि वा?" इति पृष्टवान् भयङ्कराकारः।

स्वीयानि सर्वाणि रहस्यानि भयङ्कराकारः जानाति इति ज्ञात्वा वज्रनाभः आश्चर्यं प्राप्तवान्। किन्तु तेन सः विचलितः न अभवत्। "वाणिज्ये अभिवृद्धिं प्राप्तुं तादृशव्यवहाराः अत्यावश्यकाः। मत्सदृशः वणिक् रत्नगुप्तः तस्याः सीतायाः गृहमेव अधर्ममार्गेण स्वायत्तीकृतवान्। तेन सह तुलनां कुर्मः चेत्, मम दोषः न्यूनतरः एव" इति उक्तवान् वज्रनाभः।

तस्य उत्तरेण भयङ्कराकारः तृप्तः न अभवत्। वज्रनाभेन कृतानि दुष्कर्माणि वक्तुम् आरब्धवान्। वज्रनाभः अपि एकैकस्य दोषस्य श्रवणानन्तरं तदपेक्षया





साहाय्यं प्राप्य सुखम् अनुभवन्तः सन्ति" इति उक्तवान् भयङ्कराकारः।

तथापि वज्रनाभः आग्रहम् अत्यजन् "स्वीयवाणिज्ये सीताम् अंशभागिनीं कर्तुं सत्यपालः तया पञ्चविंशतिदीनारान् गृहीतवान्। गुणसेननामकः कश्चित् अन्यः वणिक् केवलं दीनारम् एकं स्वीकृत्य स्वीयवाणिज्ये सत्यपालापेक्षया अधिकम् अंशं तस्यै दत्तवान्। एवं च सत्यपालः तस्याः उपरि पर्याप्तां दयां नैव प्रदर्शितवान्। एषा तस्य दुष्टता एव, नैव उत्तमता" इति उक्तवान्।

भयङ्कराकारः अपि पराजयम् अस्वीकुर्वन् सत्यपालेन कृतानि सत्कार्याणि एकैकशः वक्तुम् आरब्धवान्। सहसा तस्य वाक् स्थगिता अभवत्।

तदा गुहायाः अन्तः महान् विद्युत्प्रकाशः उत्पन्नः। भयङ्कराकारस्य स्थाने एकः गन्धर्वः स्थितः आसीत्। सः तौ द्वौ अपि नमस्कृत्य "भवतोः कारणेन लोके कृतानि सत्कार्याणि श्रुतवान्। तेन लब्धेन पुण्येन मम भयङ्कराकारः नष्टः। भवद्भ्यां मम धन्यवादाः। एतस्यां गुहायां स्थितासु हरितशिलासु एकाम् एव दास्यामि। भवतोः कस्मै दातव्या?" इति पृष्टवान्।

"भवतः मनः यस्मै दातुम् इच्छति, तस्मै ददातु" इति उक्तवान् सत्यपालः।

"सत्कार्याणां श्रवणमात्रेण पुण्योत्पत्तिः, तथा भवतः शापविमोचनं च जातं खलु? एवं

महत्तरपापकर्तारं वणिजं सूचयितुम् आरब्धवान्।

अन्ते भयङ्कराकारः स्वीयकर्णौ पिधाय, "हन्त हन्त! भवतः नामोच्चारणेन लोके स्थितानाम् अनेकेषां पापकर्मणां श्रवणम् आपतितम्। भवते हरितशिलां दातुम् अहं सर्वथा न शक्नोमि। सत्यपालाय एव दास्यामि। सः एव उत्तमोत्तमः" इति उक्तवान्।

"तस्य उत्तमता का अस्ति?" इति वज्रनाभः क्रोधेन पृष्टवान्।

"सः सीतायाः दुरवस्थां श्रुत्वा दयया स्वीयवाणिज्यस्य एकस्मिन् विभागे तां अंशभागिनीं कृतवान् अस्ति। सा इदानीं सुखं जीवति। एवंरीत्या एव अनेके जनाः एतेन

तर्हि साक्षात् सत्कार्याणि क्रियन्ते चेत्, कियत् पुण्यम् उत्पद्येत! इतःपरम् अहं मम कार्यक्रमेषु परिवर्तनं कृत्वा धर्ममार्गम् अनुसरामि। अतः हरितशिलां मह्यम् एव ददातु" इति उक्तवान् वज्रनाभः।

गन्धर्वः हरितशिलां वज्रनाभाय दत्त्वा तिरोहितः अभवत्। उत्तरक्षणे एव गुहायाः मुखभागस्थः शिलाखण्डः पार्श्वभागं गतः।

वेतालः एवंरीत्या कथां समाप्य "राजन्, गन्धर्वः हरितशिलां नीतिमते सत्यपालाय अदत्त्वा, दुष्टः इति ज्ञात्वा अपि वज्रनाभाय तां किमर्थं दत्तवान्? वज्रनाभस्य कारणेन एव स्वीयशापविमोचनं जातम् इति सः चिन्तितवान् वा? अथवा इतःपरं सः धर्ममार्गम् अनुसरति इति विश्वासं प्राप्य दत्तवान् वा? एतस्य संशयस्य उत्तरं ज्ञात्वा अपि भवान् न वदति चेत् भवतः शिरः शतधा छिद्रं भविष्यति" इति उक्त्वा तूष्णीम् अभवत्।

तदा त्रिविक्रमः एवम् उक्तवान्- "वज्रनाभाय गन्धर्वेण कृतं हरितशिलादानं दृष्ट्वा केवलं स्थूलविमर्शं कुर्मः चेत्, दुष्टः सुखं प्राप्नोति, उत्तमः हानिम् अनुभवति इति प्रतीयते। तथापि सूक्ष्मरीत्या अवलोकयामः चेत् वस्तुस्थितिः अन्या एव इति ज्ञायते। सत्यपालः सन्मार्गे एव स्थित्वा वाणिज्यं कुर्वन् कोट्यधिकधनम् अर्जितवान् अस्ति। तादृशेन समाजे कस्य अपि काऽपि हानिः न भवति। सत्कार्याणां कीदृशं फलं भवति इति प्रत्यक्षतः दृष्ट्वा वज्रनाभः इतःपरं स्वयमपि सन्मार्गम् अनुसर्तुं निश्चितवान् अस्ति। तादृशप्रयत्ने विशेषलाभः न लभ्यते चेत्, सः पुनः पूर्ववत् एव अधर्ममार्गम् अवलम्बते। महायोगिनः वचनानुसारेण सुवर्णोत्पादिका हरितशिला तस्य समीपे अस्ति चेत्, धनलोभेन दुष्टमार्गावलम्बनस्य आवश्यकता न भवति। एतं सूक्ष्यविषयं पर्यालोच्य एव गन्धर्वः हरितशिलां वज्रनाभाय दत्तवान्" इति।

एवंरीत्या महाराजस्य मौनभङ्ग-समनन्तरम् एव वेतालः शवसहितः अदृश्यः भूत्वा पूर्ववत वृक्षस्य शाखाम अवलम्बितवान्।



# अभिप्रायः

कश्चन भूस्वामी सायङ्काले गृहस्य पार्श्वे उद्याने विहरन् आसीत्। तदा केनापि कार्यनिमित्तेन लिपिकारः तत्र आगतवान्। भूस्वामी व्यवहारविषये वार्तालापं कृतवान्। अन्ते लिपिकारस्य गमनसमये भूस्वामी हस्ते नूतनतया धृतम् अङ्गुलीयकं प्रदर्शयन्- "समर्थेन स्वर्णकारेण एतत् अङ्गुलीयकं निर्मितम्। वज्रम् अपि अत्यमूल्यम्। कथं प्रकाशते! पश्यतु, कथम् अस्ति एतत् अङ्गुलीयकम्?" इति पृष्टवान्।

लिपिकारः किमपि उत्तरं न दत्तवान्।

भूस्वामी क्षणकालानन्तरं पुनः पृष्टवान्- "अङ्गुलीयकविषये भवतः अभिप्रायं न उक्तवान् एव किल? किमर्थं मौनं स्थितवान्?" इति।

तदा लिपिकारः उक्तवान्- "क्षन्तव्यः अयं जनः। यदि भवान् अङ्गुलीयकं कथम् अस्ति इति पृच्छेत् तर्हि निश्चयेन अभिप्रायं वदेयम्। किन्तु भवान् अङ्गुलीयकविषये विशेषम् आदरं प्रकटयन् मम अभिप्रायं पृष्टवान्। यदि अहं भवतः अभिप्रायं खण्डयेयं तर्हि भवतः दुःखं भवेत्। अथवा यदि भवतः अभिप्रायम् एव पोषयेयं तर्हि मुखस्तुतिः भवेत्। मुखस्तुत्या भवतः सन्तोषः न भवेत्। अतः एव मौनं स्थितवान्" इति।

'यजमानेन स्वाधीनैः जनैः सह कथं व्यवहारः करणीयः' इत्येतं विषयं लिपिकारः उपायेन सूचितवान् आसीत्। भूस्वामी लिपिकारस्य एतया बुद्धिमत्तया सन्तुष्टः सन् तत् अङ्गुलीयकं तस्मै एव दत्तवान्।





अस्माकं देवालयाः

# उडुपिक्षेत्रम्

श्रीकृष्णः यदा प्रौढः जातः तदा देवकी तदीयं बाल्यरूपं द्रष्टुम् इच्छां प्रकटितवती। तस्याः इच्छां पूरयितुं देवशिल्पी विश्वकर्मा बालकृष्णस्य मूर्तिं निर्माय दत्तवान।

केषाञ्चित् वर्षाणाम् अनन्तरं सः विग्रहः अर्जुनस्य वशो आगतः। प्रभासतीर्थे यदा कृष्णः इहलोकसम्बन्धं परित्यक्तवान् तदा अर्जुनः तं बालकृष्णविग्रहं सिकतास स्थापितवान्। विग्रहप्रभावेण तदुपरि स्थिता मृत्तिका कान्त्या प्रकाशमाना आसीत्।





सहस्रशः वर्षाणि अतीतानि। चतुर्दशे शतके काचन नौका तत्र आगत्य किञ्चित्कालं स्थितवती। नौकानायकः कान्तिमयीं मृत्तिकां दृष्ट्वा आश्चर्यचकितः सन् तां स्वस्यूते सङ्गृहीतवान्। ततः अग्रिमं मार्गम् अनुसृतवान् च।



एकदा कर्णाटके उडुपिक्षेत्रे समुद्रतीरे मध्वाचार्याः ध्यानमग्नाः आसन्। तदा तैः समुद्रे आगच्छन्ती एका नौका दृष्टा।

तत्सन्दर्भे समुद्रे अकस्मात् चण्डमारुतः उत्पन्नः। तेन नौका डोलायमाना अभवत्। नौकायां स्थिताः जनाः किङ्कर्तव्यतामूढाः भयेन आक्रन्दितुम् आरब्धवन्तः।





तीरे स्थिताः मध्वाचार्याः स्वकीयं काषायवस्त्रम् उन्नीय वायौ इतस्ततः चालितवन्तः। नौकानायकः एतत् दृश्यं दृष्टवान्। सः सन्तोषेण नौकां तीरम् आनीतवान्। नौका निर्विघ्नं तीरं प्राप्नोत्।

नौकानायकः मध्वाचार्यं नमस्कृत्य उक्तवान्- "आचार्याः! भवन्तः चण्डमारुततः नौकाम् अस्मान् च रक्षितवन्तः। कृतज्ञाः वयम्। अस्यां नौकायां स्थितेषु भवन्तः यत् इच्छन्ति तत् स्वीकुर्वन्तु" इति। मध्वाचार्याः क्षणकालं मौनं स्थित्वा- "एवं वा? अस्तु तावत्, नौकायां किं किं अस्ति इति प्रथमं द्रष्टुम् इच्छामि" इति उक्तवन्तः।





मध्वाचार्याः नौकां प्रविष्टवन्तः। नौकानायकः तत्रत्यानि बहूनि अमूल्यानि वस्तूनि प्रदर्शितवान्। किन्तु आचार्याः केनाऽपि वस्तुना न आकृष्टाः। अन्ते कोणे स्थितं स्यूतं दृष्ट्वा सन्तोषातिरेकेण तम् अलिङ्गितवन्तः।

"स्वामिपादाः! तस्मिन् स्यूते केवलं मृत्तिका अस्ति। नौकायाम् अमूल्यानि वस्तूनि सन्ति किल? तेषु किमपि स्वीकुर्वन्तु नाम" इति उक्तवान् नौकामायकः। मध्वाचार्याः मन्दहासं प्रकटयन्तः स्यूतम् उद्घाट्य तत्रस्थम् एकं लोष्ठं भञ्जितवन्तः। ततः सुन्दरः बालकृष्णविग्रहः प्रकटीभूतः अभवत्।





मध्वाचार्याः आलयं निर्माय तत्र तं विग्रहं प्रतिष्ठापितवन्तः। अष्ट शिष्यान् देवस्य पूजार्थं नियोजितवन्तः। तान् भक्तिं तत्त्वं च बोधितवन्तः। ते अष्ट शिष्याः अपि एकैकं मठं स्थापितवन्तः।

मध्वाचार्याणां कालतः आरभ्य अस्मिन् देवालये पूजादिकार्यक्रमाः निरन्तरं प्रचलन्ति। गर्भगृहे मध्वाचार्यैः ज्वालितः दीपः अद्यापि ज्वलन् अस्ति इति प्रतीतिः अस्ति।





अष्टसु मठाधिपेषु एकैकः अपि पर्यायक्रमेण वर्षद्वयं यावत् देवालयस्य व्यवस्थाभारं निर्वहति। व्यवस्थाभारस्य हस्तान्तरीकरणं 'पर्याय' नाम्ना व्यवह्रियते। पर्यायोत्सवसन्दर्भे उडुपिक्षेत्रे महती शोभायात्रा प्रचलति।



# कथाकल्पनम्

कोसलदेशस्य राजा शैलेन्द्रवर्मा। एकदा सः उद्याने विहरन् आसीत्। विदूषकः शकटः अपि तेन सह आसीत्। सामान्यतः राजा विहारसमये विदूषकम् आत्मना सह नयति। विनोदपूर्णसम्भाषणेन समयं यापयति च। एवं यदा वार्तालापः प्रचलन् आसीत् तदा रक्षकभटः आगत्य उक्तवान्- "प्रभो! कश्चन पण्डितः राजदर्शनम् अपेक्षमाणः द्वारे तिष्ठति" इति।

राजा पण्डितम् अन्तः प्रेषयितुम् आज्ञापितवान्। पण्डितः अन्तः आगत्य राजानं नमस्कृत्य- "महाराज! अहं वत्सदेशीयः। शोधकः इति मम नाम। भवतः दर्शनं प्राप्तुम् इच्छन् आगतवान् अस्मि" इति उक्तवान्।

यद्यपि वत्सदेशविषये शैलेन्द्रवर्मणः विरोधः कोऽपि नास्ति। तथापि काचित् अल्पत्वभावना तु आसीत् एव। सः पण्डितस्य वचनं श्रुत्वा मन्दहासं प्रकटयन्- "एवं वा? भवान् एकाकी एव आगतवान्? अन्ये कविपण्डिताः न आगताः? यतः वत्सदेशस्य कविपण्डिताः देशाटनार्थं प्रस्थिताः इति भाति" इति उक्तवान्।

तदा शोधकः - "महाराज! अहं तु एकाकी एव आगतवान्। इतरकवीनां विषये न जानामि। वत्सदेशविषये भवदभिप्रायः युक्तः एव। अस्माकं महाराजस्य साहित्याभिमानं भवान् जानाति एव। कवीनां विषये भवतः आदराभिमानम् असदृशम्। किं प्रत्यक्षकथनेन?" इति उक्तवान्।

तस्य वचनेन सन्तुष्टः शैलेन्द्रवर्मा- "भवतः वत्सदेशस्य कोषागारः रिक्तः जातः इव दृश्यते। अतः एव भवतः राजा आस्थानपण्डितान् इतरत्र गन्तुं प्रेरयन् अस्ति। पण्डितैः जीविकार्थं कुत्रापि गन्तव्यम् एव किल। किन्तु अन्यव्ययार्थं सः किं वा कुर्यात्?" इति वदन् गर्वेण विदूषकस्य



मुख दृष्टवान्।

शैलेन्द्रवर्मणः वचनस्य कटुत्वं तिरस्कारभावनां वा अविगणयन् शोधकः मन्दहासेन- "भवतां देशः तु सम्पद्भरितः। वत्सदेशो किम्? इदानीं क्षामः आगतः इव। भवान् तु वत्सदेशस्य कोषागारविषये मम कथनतः पूर्वम् एव सर्वं जानाति। वस्तुतः कोषागारः देशस्य जीवनाडी। किन्तु वत्सदेशे स एव दुर्बलः" इति उक्तवान्।

शोधकस्य वचनेन इतोऽपि सन्तुष्टः शैलेन्द्रवर्मा एकं सुवर्णहारं कण्ठतः निष्कासितवान्। अग्रे प्रचलिष्यमाणम् ऊहयित्वा विदूषकः राजानम् उक्तवान्- "प्रभो! क्षणं तिष्ठतु। वस्तुस्थितिं ज्ञात्वा किल प्रतिक्रिया प्रदर्शनीया? एषः पण्डितः खलु? एतस्य पाण्डित्यं भवता अद्यावधि न परीक्षितम्। प्रियवाक्यकथने कथाकल्पने च एषः समर्थः इति तु एतावता प्रमाणितं, तावदेव" इति।

विदूषकस्य वचनं श्रुतवतः शोधकस्य मुखं म्लानम् अभवत्।

तदा राजा कोपेन विदूषकस्य मुखं पश्यन् "असम्बद्धं मा प्रलपतु। एतेन का कथा कल्पिता? वस्तुतः कथाकल्पनं नाम किम्?" इति पृष्टवान्।

"प्रभो! कल्पितकथायाः लक्षणं शास्त्रे बहुधा वर्णितम् अस्ति। कवयः बहवः चारित्रिककथां अपि कल्पयित्वा लिखन्ति। मम कश्चन स्नेहितः एतादृशकल्पित-कथालेखने अतीव समर्थः। तेन एव कल्पितकथायाः लक्षणम् अपि सविस्तरम् उक्तम्। तत्सर्वं वक्तव्यं चेत् तदर्थं महान् कालः अपेक्षितः। तावद्दीर्घकालम् एतेन किमर्थम् अत्र स्थातव्यम्? वृथा क्लेशः किमर्थम्? एषः गत्वा समीपे एव लतागृहे शिलासने उपविश्य विश्रान्तिम् अनुभवतु। तावति काले अहं कल्पितकथाविषये सविवरणं वदामि। अनन्तरं यथोचितम् आचरितुम् अर्हति भवान्" इति उक्तवान् विदूषकः।

विदूषकस्य वचने आसक्तिं प्रदर्शयन् राजा शोधकस्य मुखं दृष्टवान्। एतेन शोधकः महाराजस्य अभिप्रायं ज्ञातवान्

एव। अतः मौनं लतागृहं प्रति प्रस्थितवान्।

राजा विदूषकं दृष्ट्वा - "किमपि वदामि इति उक्तवान् किल? कः विशेषः तत्र?" इति पृष्टवान्।

"महाराज! प्रियवाक्यकथनम् अपि कल्पितकथा एव किल। वस्तुस्थितिः यथाकथम् अपि भवतु, एते प्रियवाक्यकथकाः कल्पनाप्रपञ्चं चित्रयन्तः स्वलाभं सम्पादयन्ति" इति उक्तवान् विदूषकः।

"भवतः वचनस्य तात्पर्यम् इतोऽपि मया न ज्ञातम्। सरलया शैल्या वदतु भोः" इति महाराजः उक्तवान्।

तदा विदूषकः उक्तवान् - "प्रभो! एषः शोधकः कीदृशः पण्डितः इति वयं न जानीमः। कृतकविनयप्रदर्शने तु एषः निपुणः। वत्सदेशः अल्पं राज्यं स्यात् नाम। किन्तु वर्धनः यथाशक्ति कविपण्डितान् पुरस्कुर्वन् अस्ति इति तु सत्यम् एव" इति।

राजा किमपि अनुक्त्वा केवलं शिरः चालितवान्। विदूषकः पुनः विनयेन उक्तवान् - "सः वर्धनः भवतः सहपाठी आसीत्, नलन्दगुरुकुले भवतोः अध्ययनं प्रवृत्तम् इति प्रायः सर्वे जानन्ति एव। केनचित् कारणेन भवतोः मध्ये असूयाभावना उत्पन्ना इति विषयं तु राजाश्रिताः केचन एव जानन्ति, न तु सर्वे" इति।

राजा मन्दहासं प्रकटयन् - "ये आवयोः मतिभेदं जानन्ति तेषु भवान् अपि अन्यतमः किल" इति पृष्टवान्।

"तत् तु सत्यम्। आत्मानं पण्डितं कथयन् अत्र आगतः एषः शोधकः अपि एतं विषयं जानाति इति मम अभिप्रायः। अतः एव



भवान् वत्सदेशविषये वर्धनविषये च यद्यत् उक्तवान् तत्सर्वं सः सत्यम् इति वदन् कथां कल्पयन् भवतः प्रीतिं सम्पादयितुं प्रयत्नं कृतवान्'' इति उक्तवान् विदूषकः।

''एवं प्रियवाक्यानि कथयन् एषः वत्सदेशस्य पण्डितः किमपि पारितोषिकं प्राप्तुं प्रयत्नं कृतवान् इति किल भवान् वदति? पारितोषिकप्राप्तौ इच्छा सहजा। तदर्थम् एषः मम वचनं पुरस्कृतवान् स्यात्। अत्र कः महादोषः?'' इति पुनः पृष्टवान् राजा।

''प्रकृतसन्दर्भविषये केवलं न वदामि अहम्। वत्सराजस्य निन्दनं कुर्वन् एषः भवतः हस्ततः पारितोषिकं प्राप्स्यति। तथैव भवन्तं निन्दन् एषः वत्सराजतः अपि पारितोषिकं प्राप्नुयात् एव। एवं स्वार्थसाधनम् एतेषां प्रवृत्तिः। एतदर्थम् एव एते विविधाः कथाः कल्पयन्ति। अतः एतादृशानां विषये जागरूकतया भवितव्यम् इति सूचयितुम् अहं पारितोषिकदानतः भवन्तं निवारितवान्'' इति उक्तवान् विदूषकः।

शैलेन्द्रवर्मा किञ्चित्कालम् आलोच्य - ''अस्तु तावत्, भवान् अपि एतत्सर्वं कथारूपेण कल्पयित्वा न उक्तवान् इत्यत्र कः विश्वासः? परीक्षां कुर्मः तावत्'' इति वदन् भटम् आहूय शोधकपण्डितं स्वसमीपम् आनेतुं सूचितवान्।

भटः लतामण्डपसमीपं गतवान्। किन्तु तत्र शोधकः न आसीत्। सः तथैव प्रत्यागत्य राजानं वस्तुस्थितिं निवेदितवान्।

एतद्विषये आश्चर्यं प्रकटयन्तं राजानं विदूषकः उक्तवान् - ''वत्सदेशतः आगतः कश्चन बन्धुः मम गृहे निवसति इति अहम् उक्तवान् किल? एतद्वचनं सत्यं मन्यमानः शोधकः इतः पलायनं कृतवान्। ज्ञाता किल वस्तुस्थितिः? यदि अहं किमपि न वदेयं तर्हि अमूल्यः रत्नहारः अपात्रे दत्तः अभविष्यत्'' इति।

''एवं तर्हि एतं हारं सत्पात्रे एव ददामि'' इति वदन् राजा शैलेन्द्रवर्मा हारं विदूषकस्य कण्ठे स्थापितवान्।





# शिवलीला

सर्वे शबराः ततः निर्गतवन्तः। अनन्तरं शिवस्य विषये तिन्नस्य महती अनुकम्पा उत्पन्ना। "हन्त! वराकः एषः शिवः कदा आरभ्य एवंरीत्या निराहारः स्यात्?" इति चिन्तयन् चापं स्कन्धे आरोप्य उचितम् आहारम् अन्वेष्टुं प्रस्थितवान्। शीघ्रमेव एकं सूकरं बाणेन हत्वा आनीतवान्। तस्य सूकरशरीरस्य मांसखण्डान् अग्नौ पक्त्वा, तान् खण्डान्, सुवणमुखीनद्याः जलं च शिवस्य पुरतः स्थापयित्वा "स्वीकरोतु, स्वामिन्, स्वीकरोतु!" इति उक्तवान्।

शिवेन किमपि उत्तरं न दत्तम्। सः न चलितवान् अपि। तिन्नः बहुधा प्रार्थितवान्। किमपि प्रयोजनं न अभवत्। तदा तिन्नः "यदि भवान् एतान् न खादति, तर्हि अहं भवतः पादयोः समीपे पतित्वा प्राणान् त्यजामि" इति वदन् रोदितुम् एव आरब्धवान्।

तस्य भक्तिभावेन सन्तुष्टः शिवः "उत्तिष्ठतु वत्स! एतत् अहं स्वीकरोमि" इति वदन्, तेन तत्र स्थापितं सर्वं भुक्त्वा, जलम् अपि पीतवान्।

कानिचन दिनानि अतीतानि। अनन्तरं कदाचित् कश्चित् शैवः शिवगोचरनामकः ब्राह्मणः तं देवालयम् आगत्य तत्र स्थितं मालिन्यादिकं दृष्ट्वा "भोः देव! किमिदम्? अत्र एवम्भूतम् उच्छिष्टम् मालिन्यं च सर्वत्र दृश्यते? कः एवंरीत्या भवतः आलयं मलिनीकृतवान्? भवान् न वदति चेत्, अहं निराहारव्रतं स्वीकृत्य अत्रैव प्राणान् त्यजामि। सः दुष्टः अवश्यं बोधयितव्यः। अहं तूष्णीं स्थातुं न शक्नोमि" इति वदन् साग्रहं तत्रैव स्थितवान्।



स्रावितवान्। एतत् दृष्ट्वा तिन्नः व्याकुलः भूत्वा "अहो, शिवस्य नेत्रवेदना!" इति वदन् नेत्रस्य चिकित्सां कर्तुम् आरब्धवान्। सः स्वीयपूर्वानुभवं स्मृत्वा स्मृत्वा बहुधा प्रयतितवान्। किन्तु किमपि प्रयोजनं न अभवत्। शिवस्य नेत्रतः रक्तस्रावणम् आरब्धम्।

तदा किङ्कर्तव्यतामूढः तिन्नः "नेत्रस्य औषधम् अन्यत् नेत्रमेव" इति चिन्तयन्, बाणस्य अग्रेण स्वीयम् एकं नेत्रम् उत्पाट्य, शिवस्य नेत्रस्य उपरि स्थापितवान्।

सद्यः एव शिवस्य द्वितीयनेत्रात् अपि नेत्रस्रावणं दृष्टम्।

"इदानीं चिन्ता नास्ति। तस्य अपि औषधं मत्समीपे अस्ति" इति वदन् तिन्नः स्वीयं द्वितीयनेत्रम् अपि उत्पाटयितुं यदा प्रवृत्तः, तदा "तिष्ठतु! तिष्ठतु!" इति वदन् शिवः तिन्नस्य हस्तं गृहीतवान्।

एवं प्रत्यक्षीभूतः शिवः ब्राह्मणं दृष्ट्वा "भोः ब्राह्मण! एतस्य पामरस्य भक्तिं दृष्टवान् खलु! इदानीं भवान् तृप्तः वा?" इति पृष्टवान्।

विस्मितः ब्राह्मणः शिरः चालयन् मूकवत् तूष्णीं स्थितवान्। शिवः ब्राह्मणं तिन्नं च दृष्ट्वा "भवन्तौ किं वरम् इच्छतः? पृच्छताम्" इति पृष्टवान्।

"अज्ञौ आवां किं वा पृच्छावः देव! भवान् एव उचितम् अनुग्रहं करोतु" इति द्वौ अपि उक्तवन्तौ।

"सम्भ्रमः मास्तु भोः ब्राह्मण! एकः अरण्यवासी भक्तः स्वसम्प्रदायानुसारं महत्या भक्त्या मां सेवमानः अस्ति। तस्य भक्तिक्रमं ज्ञातुं भवान् इच्छति चेत्, मम पृष्ठभागे गुप्तरूपेण उपविशतु। अनन्तरं तस्मै उपदेशं दातुम् इच्छति चेत्, ददातु" इति शिवलिङ्गतः निस्सृतं वचनं श्रुतम्।

किञ्चित्कालानन्तरं तिन्नः आगतवान्। मुखे जलं संस्थाप्य, लिङ्गस्य उपरि निष्ठीवनं कुर्वन् अभिषेकं कृतवान्। लिङ्गस्य उपरि पत्राणि, पुरतः मांसं च स्थापयित्वा "भोः शिव! स्वीकरोतु! अद्य उत्तमं मांसम् आनीतवान् अस्मि" इति वदन् साष्टाङ्गनमस्कारं कृतवान्।

अद्य शिवः भक्तं परीक्षितुम् इच्छन् मांसं न खादितवान्। प्रत्युत स्वीयनेत्रात् अश्रु

शिवः तयोः भक्त्या सम्प्रीतः भूत्वा, तयोः पुनः प्रापञ्चिकविषयाणां क्लेशः मास्तु इति निश्चित्य, तौ द्वौ अपि स्वशरीरान्तर्लीनौ कृत्वा, ततः तिरोहितः अभवत्।



एकस्मिन् नगरे वीरसङ्गमनामकः कश्चित् सुन्दरः युवकः आसीत्। परमशिवभक्तः सः शरभवाहनं शिवम् आराधयति स्म।

तस्य विवाहं कर्तुं प्रयतमानः तस्य ज्येष्ठपितृव्यः एकदा ओङ्कारपुरं गतवान्। तत्र तस्य श्यालः आसीत्। सः श्यालः महाधनिकः तथा शिवभक्तः अपि। श्यालः आवुत्तः च परस्परं दृष्ट्वा महता आनन्देन आलिङ्गितवन्तौ। अतिथिं भोजनादिभिः सत्कृत्य, सः गृहस्थः "भाव, किं कार्यं निमित्तीकृत्य भवतः अत्र आगमनम्?" इति पृष्टवान्।

"मम आगमनस्य निमित्तम् एकं शुभकार्यम् एव। अस्माकं वीरसङ्गमः इदानीं विवाहवयस्कः जातः खलु? अतः वधूम् अन्विष्यन् भवतः नगरम् आगतः। अत्र तु पश्यामि यत् भवदीया पुत्री चन्द्रिणीदेवी अस्माकं वीरसङ्गमकृते अनुरूपा कन्या अस्ति। भवतः कोऽपि आक्षेपः नास्ति चेत् शुभस्य शीघ्रम् इति वक्तुं शक्यते" इति उक्तवान् अतिथिः।

गृहस्थः अत्यानन्देन "भाव! किमर्थम् एवं पृच्छति? वीरसङ्गमापेक्षया योग्यतरः वरः कुत्र वा लभ्येत? भवान् एव मुहूर्तनिर्णयं कृत्वा द्वयोः पक्षयोः दायित्वं स्वीकृत्य विवाहं कारयतु" इति उक्तवान्। श्यालः तदानीम् एव पञ्चाङ्गं दृष्ट्वा विवाहार्थं मुहूर्तं निर्णीतवान्।

एकस्मिन् दिने ओङ्कारपुरस्य राजा भास्करः विहारं समाप्य राजभवनं प्रत्यागच्छन् कस्यचित् गृहस्य द्वारभागे स्थितां चन्द्रिणीदेवीं दृष्टवान्। अनन्तरं सः अग्रे गन्तुम् असमर्थः भूत्वा ताम् एव पश्यन् तत्रैव स्थितवान्। एतत् दृष्ट्वा भीता चन्द्रिणीदेवी झटिति अन्तः गतवती।

महाराजः ताम् एव स्मरन्, गृहं गत्वा, सचिवान् आहूय, मार्गे दृष्टं गृहं गृहस्थितां तरुणीं च निर्दिश्य स्वीयां परिणयेच्छां निवेदितवान्। विवाहार्थं सज्जीकर्तुम् आज्ञापितवान् च। भास्करराजस्य सचिवाः



चन्द्रिणीदेव्याः गृहम् आगत्य, तस्याः पितरं "भवतः पूर्वपुण्यम् इदानीं फलितं भोः! भवदीयकुमारीं परिणेतुम् अस्माकं महाराजः इच्छति। एतत् सौभाग्यं स्वयम् एव भवतः गृहं समागतम् अस्ति। एषा महाराज्ञी भविष्यति" इति उक्तवन्तः।

तदा तस्याः पिता "सत्यं भोः, मम पुत्री साक्षात् महाराज्ञी भविष्यति चेत्, तदपेक्षया अतिशयं भाग्यं किं वा स्यात्? भवद्भिः उक्तं सर्वं युक्तम् एव। किन्तु इदानीं व्यवहारः समाप्तः अस्ति। मम पुत्रीं कस्मैचित् दातुं प्रतिज्ञातवान् अस्मि। इदानीम् अन्यथाकर्तुं न शक्नोमि" इति उक्तवान्।

सचिवाः गत्वा महाराजं सर्वां वार्तां निवेदितवन्तः। महाराजः स्वीयान् आप्तजनान् सचिवान् च आहूय "येन केनापि प्रकारेण तां चन्द्रिणीदेवीम् आनीय मम परिणयः भवद्भिः साधनीयः। नो चेत् मम प्राणाः न तिष्ठेयुः" इति उक्तवान्।

ते सचिवाः पुनः चन्द्रिणीदेव्याः पितृसमीपं गत्वा "भवान् कीदृशः मन्दबुद्धिः भोः! सौभाग्यलक्ष्मीः स्वयं भवतः गृहं सम..गता अस्ति। भवान् तु तां निवारयति किल! साक्षात् महाराजः भवदीयपुत्रीं परिणेतुम् इच्छति। भवान् तु निराकरोति। अलम् एतेन मौढ्येन। झटिति पुत्रीं महाराजाय ददातु" इति आग्रहं कृतवन्तः।

"महाराजः जामाता भवति इति तु महत् सौभाग्यम् एव। किन्तु एतादृशभोग भाग्यादिलोभेन अहं वचनभ्रष्टः भवामि चेत्, किं भवन्तः एव मां न निन्दन्ति?" इति पृष्टवान् चन्द्रिणीदेव्याः पिता।

ते जनाः पुनः महाराजसमीपं प्रत्यागत्य "भवता सा कन्या विस्मर्तव्या। सुन्दरकन्यानाम् अभावः नास्ति एव। तस्याः जनकस्य व्यवहारः निश्चयेन प्रशंसनीयः अस्ति। न्यायमार्गेण तस्य व्यवहारः नैव शक्यते वारयितुम्" इति उक्तवन्तः।

महाराजः पुनः किमपि अनुक्त्वा तान् प्रेषितवान्। अनन्तरं स्वयम् एकाकी एव चन्द्रिणीदेव्याः गृहं प्रति प्रस्थितवान्।

स्वीयगृहं समागतं महाराजं दृष्ट्वा, चन्द्रिणीदेव्याः मातापितरौ अतीव भीतौ। "भीतिः मास्तु" इति तौ उक्त्वा, चन्द्रिणीदेवी स्वयम् एव बहिः आगत्य



"भवत्याः कृते अहं तपः कुर्वन् अस्मि। मां प्रति भवत्याः एतादृशः धर्मोपदेशः युज्यते वा?" इति पृष्टवान् राजा।

स्वीयं निर्णयं त्यक्तुम् अनिच्छन्ती अपि चन्द्रिणीदेवी पुनः वाचा तथा न उक्तवती। मनसि शिवध्यानं कुर्वती, शिवे एव सर्वभावं समर्प्य महाराजं "मां भवतः पत्नीं कर्तुम् एव ईश्वरः इच्छति चेत्, तथा एव अस्तु। अस्माकं वंशस्य सम्प्रदायानुसारं विवाहतः पूर्वं सप्ताहावधिकं ईश्वराराधनं करणीयम्। अद्य एव अहं व्रतस्य आरम्भं करोमि" इति उक्तवती। महाराजः सन्तोषं प्राप्य ततः निर्गतवान्।

महाराजस्य पुरतः स्थित्वा "आगच्छतु! अग्रजस्य एतादृशकृपया अहं महान्तं सन्तोष प्राप्तवती। अन्तः समागच्छतु" इति आहूतवती।

"भवतीं परिणेतुम् अपेक्षमाणं मां प्रति एतादृशसम्बोधनम् अयुक्तं खलु? मां परिणेतुं कन्याः अहमहमिकया धावन्ति। ताः सर्वाः त्यक्त्वा मम मनः भवत्याम् आसक्तम् अस्ति। भवतीं महाराज्ञीं कर्तुं निश्चितवान् अस्मि। कृपया अङ्गीकरोतु" इति उक्तवान् भास्करराजः।

"महाराज, यदा अहं वीरसङ्गमाय प्रतिश्रुता, तदारभ्य अहं तम् एव पतिं मन्यमाना अस्मि। कन्यायाः पतिद्वयस्वीकारः युज्यते वा? कृपया मां क्षाम्यतु" इति उक्तवती चन्द्रिणीदेवी।

महाराजस्य निर्गमनानन्तरं चन्द्रिणीदेवी जातं सर्वं वृत्तान्तं मातापितरौ निवेदितवती। तौ तं विषयं पत्रे विलिख्य वीरसङ्गमाय दातुं प्रेषितवन्तौ। वीरसङ्गमः ज्येष्ठानाम् अनुमतिं प्राप्य, रहस्यरूपेण आगत्य, चन्द्रिणीदेवीं पूर्वनिश्चिते मुहूर्ते परिणीय, तया सह स्वगृहं गतवान्।

एतां वार्तां गूढचारद्वारा महाराजः ज्ञातवान्। चन्द्रिणीदेव्याः वञ्चनां दृष्ट्वा सः क्रोधाविष्टः अभवत्। सः सैनिकान् आहूय "भवन्तः वीरसङ्गमं हत्वा, चन्द्रिणीदेवीं बद्ध्वा आनयन्तु" इति आज्ञापितवान्।

महाराजस्य सैनिकाः वीरसङ्गमस्य गृहं प्रति प्रस्थितवन्तः। वीरसङ्गमः दूरात् एव तान् दृष्टवान्। "अहम् एकः अस्मि। ते बहुसङ्ख्याकाः। एकाकिना मया तेषां निग्रहः अशक्यः" इति ज्ञात्वा, स्वीयम् इष्टदैवं

शरभवाहनं ध्यातुम् आरब्धवान्।

सद्यः एव भयङ्कराकारः शरभः प्रत्यक्षः भूत्वा, आग्नेयास्त्रसदृशानि अत्युग्राणि आयुधानि वीरसङ्गमाय दत्त्वा, "एतैः शत्रूणां संहारं करोतु!" इति उक्त्वा तिरोहितः अभवत्।

वीरसङ्गमः स्वीयहस्ते उपस्थितं खड्गं दृष्ट्वा, महता सन्तोषेण सैनिकान् अभिमुखीकर्तुं प्रवृत्तः, तान् हन्तुम् आरब्धवान् च। कस्यचित् शैलस्य उपरि स्थितः भास्करराजः एतत् युद्धं दृष्ट्वा सम्भ्रान्तः अभवत्।

अत्र वीरसङ्गमः स्वीयं खड्गं कस्यचित् सैनिकस्य उपरि उन्नीतवान्। किन्तु सद्यः एव सः परिचितः शिवभक्तः इति ज्ञात्वा, स्वीयमस्तकम् अवनमय्य नमस्कारं कृतवान्। एतं प्रसङ्गं दृष्ट्वा भास्करराजः वीरसङ्गमस्य शिवभक्तिं साधनभूतां कृत्वा, तस्य हननं करणीयम् इति निश्चित्य, स्वयं शिवभक्तवेषधारी भूत्वा, शैलतः अवतीर्य वीरसङ्गमस्य समीपं गत्वा स्थितवान्। तं नमस्कर्तुं यदा वीरसङ्गमः अधोमुखः अभवत्, तदा महाराजः तस्य कण्ठस्य उपरि खड्गेन प्रहारं कृतवान्। सः खड्गः पुष्पमालारूपेण वीरसङ्गमस्य वक्षःस्थलम् अलङ्कृतवान्।

तस्मिन् एव क्षणे वृषभवाहनः शिवः प्रत्यक्षः भूत्वा वीरसङ्गमं "भवान् किं वरम् इच्छति?" इति पृष्टवान्। सः वीरसङ्गमः स्वकृते, स्वपत्न्याः कृते भास्करराजकृते च शिवसायुज्यं ददातु इति प्रार्थितवान्।

"भवन्तम् अपकर्तुम् उद्युक्तस्य पापिनः तस्य महाराजस्य कृते शिवसायुज्यं दापयितुम् इच्छति वा?" इति शिवः वीरसङ्गमं पृष्टवान्।

"भोः महादेव! एषः महाराजः शैवचिह्नानि धृतवान् अस्ति। इदानीं भवतः दर्शनम् अपि प्राप्तवान्। एवं हि सति इतः परम् एतस्मिन् पापानि कथं तिष्ठेयुः?" इति पृष्टवान् वीरसङ्गमः।

तदा शिवः सन्तोषेण तान् सर्वान् अपि कैलासं नीतवान्। (समाप्तम्)



# उत्तमः कर्मकरः

वीरेश्वरः कस्यचित् भूस्वामिनः वाटिकायां कार्यं करोति स्म। वार्धक्यकारणतः सः कार्यं कर्तुम् असमर्थः सञ्जातः। तदा सः 'उद्योगतः विश्रान्तिः स्वीकरणीया' इति चिन्तितवान्, भूस्वामिनम् एतं विषयं निवेदितवान् च।

भूस्वामी एतत् अङ्गीकृत्य उक्तवान् - "भवतः स्थाने आलस्यरहितं कर्तव्यनिरतं भवादृशम् अन्यं भवान् एव नियोजयतु" इति।

वीरेश्वरः स्वपरिचितान् एतं विषयं सूचितवान्। त्रयः उद्योगापेक्षया वीरेश्वरसमीपम् आगतवन्तः।

वीरेश्वरः तान् उक्तवान् - "भवत्सु अन्यतमः गृहस्य पुरतः मार्गे स्थितां शिलाम् अपसार्य आगच्छतु" इति।

आगतेषु द्वौ शिलां दृष्ट्वा - "एतावद्बृहती शिला कथं वा इतः निवारयितुं शक्येत? आवां न शक्नुवः एव" इति उक्तवन्तौ। ततः निर्गतवन्तौ च।

तृतीयः तु - "अहम् एतां शिलाम् इतः अपसारयिष्यामि। तदर्थम् एकं खनित्रम् आवश्यकम्" इति उक्त्वा खनित्रं स्वीकृत्य शिलासमीपं गतवान्। शिलां परीक्षमाणः सः - "अहो! कथम् एषा शिला द्वारसमीपम् आगता। कस्यचित् दुरात्मनः चेष्टा स्यात् एषा" इति वदन् शिलां पादेन नोदितवान्।

तदा आश्चर्यकरं प्रवृत्तं यत् शिला सुलभतया किञ्चिद्दूरं गता। वस्तुतः सा न शिला। गोण्यां तृणानि पूरयित्वा तदुपरि मृत्तिकां लेपितवान् आसीत् वीरेश्वरः। अतः शिला इव दृश्यते स्म तत्।

वीरेश्वरः तृप्तिभावेन भूस्वामिनम् उक्तवान् - "श्रीमन्! एषः स्वभावतः श्रमशीलः। आलस्यरहितः कर्तव्यनिष्ठः च। एतम् उद्योगे नियोजयितुम् अर्हति भवान्" इति।





# लोकज्ञानम्

एकदा शङ्करः नाम कश्चन ग्रामीणः कार्यनिमित्तं पार्श्वग्रामं गतवान्। उषःकाले प्रत्यागमनसमये सः अजागरूकतया मार्गपार्श्वे स्थिते गर्ते पतितवान्।

सः गर्तः पङ्केन पूर्णः आसीत्। पतनेन दिग्भ्रान्तः शङ्करः उपरि आगन्तुं प्रयत्नं कृतवान्। किन्तु यथा यथा प्रयत्नः कृतः तथा तथा सः अधः गतवान्। इतोऽपि प्रयत्नः क्रियेत चेत् मरणम् एव शरणम् इति निश्चितवान् सः। 'प्रातःकालपर्यन्तं निश्चलतया स्थितिः एव वरम्' इति चिन्तितवान् अपि।

यदा सूर्यप्रकाशः मन्दं व्याप्तः, तदा कश्चित् दूरे आगच्छन् दृष्टः। सन्तुष्टः शङ्करः उच्चस्वरेण तम् आहूतवान् - "भोः भोः! शीघ्रम् अत्र आगच्छतु। गर्ते पतितः अहम् स्वयम् उपरि आगन्तुं न शक्नोमि। कृपया साहाय्यं करोतु" इति।

यदा सः समीपम् आगतवान् तदा शङ्करः प्रवृत्तं सर्वं निवेद्य पुनः अपि साहाय्यं प्रार्थितवान्।

सः आगन्तुकः महता प्रयासेन स्थूलकायं शङ्करम् उपरि आनीतवान्। किन्तु अपरक्षणे सः आत्मनः समतोलनं स्थापयितुं प्रयतमानः गर्ते पतितवान्। श्रान्तः अपि शङ्करः सङ्कटम् अनुभवन् तम् आगन्तुकं पङ्कतः उन्नीतवान्। इदानीम् उभौ अपि पङ्कमयौ जातौ।

समीपे कुत्रापि जलं न आसीत्। अतः तौ तत्क्षणे शरीरं क्षालयितुं न शक्तवन्तौ। पङ्कमयवस्त्रं धृत्वा एव तौ ग्रामं प्रति प्रस्थितवन्तौ। मार्गे वार्तालापेन ज्ञातं यत् तस्य आगन्तुकस्य नाम शेखरः इति। शेखरः दूरग्रामतः एतं ग्रामम् उद्दिश्य एव प्रस्थितः आसीत्। "अस्माकं ग्रामे भवतः किं कार्यम्?" इति पृष्टवान् शङ्करः।



"तत्र शङ्करः नाम महापुरुषः द्रष्टव्यः। तदर्थम् एव आगतवान् अस्मि" इति उक्तवान् शेखरः।

"तम् इतःपूर्वं दृष्टवान् वा भवान्? कीदृशं कार्यं भवतः?" इति पृष्टवान् शङ्करः।

"परिचयः इतःपरं भवेत्। तत्र किं कार्यम् इति तु अहं वक्तुं न इच्छामि" इति उक्तवान् शेखरः।

स्ववस्त्रे लग्नं पङ्कं पश्यन् शेखरः पुनः उक्तवान्- "भवान् एतद्ग्रामीणः एव किल? तस्य शङ्करस्य गृहं जानाति चेत् सूचयतु। वस्त्रेषु स्थितस्य पङ्कस्य निवारणार्थम् उपायं जानाति चेत् तदपि कृपया सूचयतु" इति।

ते यदा ग्रामं प्राप्तवन्तः तदा सर्वे ग्रामीणाः एतेषां विचित्रं पङ्कमयं वेषं कुतूहलेन दृष्टवन्तः। पुनः स्वकार्येषु व्यापृताः अभवन् च।

तत्समये मार्गे मिलितः धनिकः विश्वेशः शङ्करं पृष्टवान्- "किमेतत् भोः! कः एषः भवतः अवतारः?" इति।

शङ्करः शेखरं प्रदर्शयन् मन्दहासम् प्रकटयन् उक्तवान्- "अहं पार्श्वग्रामतः आगच्छन् आसम्। तदा केदारे पङ्कमये गर्ते पतितः एषः दृष्टः। एतस्य उन्नयनप्रयत्ने अहम् अपि गर्ते पतितः" इति।

धनिकः विश्वेशः अपि मन्दहासं प्रकटयन् ततः गतवान्।

पुनः किञ्चिद्दूरं यावत् गतं तदा कश्चन वृद्धः मिलितवान्। विश्वेशः यं प्रश्नं पृष्टवान् तमेव प्रश्नम् एषः अपि पृष्टवान्।

तदा शङ्करः मन्दहासं प्रकटयन् उक्तवान्- "अहं पार्श्वग्रामतः आगच्छन् पङ्के पतितः। एषः महानुभावः देवः इव समये समागत्य माम् उन्नीतवान्" इति।

इतोऽपि किञ्चिद्दूरं यदा गतं तदा अन्यः कश्चन आश्चर्येण पूर्वतनम् एव प्रश्नं पृष्टवान्।

"उषःकाले पार्श्वग्रामतः आगमनसमये पङ्कमये गर्ते कश्चन शकटः मया दृष्टः। पुण्यवशात् एषः अपि मया सह आसीत्। आवाम् द्वौ अपि शाकटिकस्य साहाय्यं कृतवन्तौ। तत्सन्दर्भे आवयोः परिस्थितिः एवं जाता" इति उक्तवान् शङ्करः।

शङ्करस्य व्यवहारस्य तत्त्वं ज्ञातुं न शक्तवान् शेखरः। सः आश्चर्येण शङ्करं पृष्टवान्- "श्रीमन्! मम कश्चन संशयः अस्ति। एतस्याः परिस्थितेः कारणं पृच्छते एकैकस्मै अपि एकैकविधम् उत्तरं दत्तवान् भवान्। तत् किमर्थम्?" इति।

"भवान् तु शङ्करसमीपे किं कार्यम् अस्ति इति न वदति। एवं स्थिते मया किमर्थं भवतः प्रश्नस्य उत्तरं दातव्यम्? कथञ्चित् एषः विषयः भवत्सम्बद्धः तु न किल?" इति पृष्टवान् शङ्करः।

"भवान् प्रथमं मम सन्देहान् परिहरतु। अनन्तरम् अहं मम आगमनकारणं निवेदयिष्यामि" इति उक्तवान् शेखरः।

शङ्करः तत् अङ्गीकृत्य उक्तवान्- "अस्मिन् ग्रामे अधिकभूमियुतेषु धनिकेषु अहम् अपि अन्यतमः। एतादृशः अहं पङ्के पतितवान् इति तु अपमानस्य विषयः खलु? एतं विषयं सर्वे यथावत् जानन्ति चेत् ते उपहसेयुः किल?" इति।

"भवान् किमर्थं तथा चिन्तयति? कः कदा, कां दशां प्राप्नुयात् इति कः वा जानीयात्?" इति पृष्टवान् शेखरः।

"भवदुक्तं सत्यम् एव। किन्तु कालः परिवर्तनशीलः किल? एषु दिनेषु कोऽपि वस्तुतत्त्वं ज्ञातुं न इच्छति। अन्यस्य उपहासार्थम् अवकाशं प्रतीक्षन्ते सर्वेऽपि" इति उक्तवान् शेखरः।

"एवं तर्हि एकं वृद्धं वस्तुस्थितिम् एव निवेदितवान् खलु भवान्?" इति पुनः



पृष्टवान् शेखरः।

तदा शङ्करः मन्दहासं प्रकटयन्- "सः वृद्धः एतादृशान् लघुविषयान् विशेषतः न परिगणयति। सौजन्यार्थं सः मां तथा पृष्टवान्, न तु कुतूहलेन। अतः तस्मै वस्तुस्थितिं निवेदयामि चेत् मम न काऽपि हानिः। अतः एव तस्मै वस्तुस्थितिः निवेदिता। इतरत्र तु श्रोतुः स्वभावानुगुणम् उत्तरं दत्तम्" इति उक्तवान्।

"लघुविषयेषु अपि भवान् विशेषम् अवधानं ददाति किल। भवतः लोकज्ञानम् अपूर्वम्" इति अतीव आश्चर्यं प्रकटितवान् शेखरः।

शङ्करः क्षणकालं मौनं स्थित्वा शेखरं पृष्टवान्- "भवान् आगमनकारणं न निवेदितवान् एव किल?" इति।

तदा शेखरः - "मम तु लोकज्ञानं विशेषतः नास्ति। कुत्र कथं व्यवहरणीयम् इत्यपि अहं न जानामि। एतद्विषये मार्गदर्शनं प्राप्तुम् एव शङ्करसमीपम् आगतवान् अहम्। शङ्करविषये अहं बहुत्र श्रुतवान्, न तु तं मुखतः दृष्टवान्। मम ग्रामे तु पदे पदे तस्य उदाहरणं यच्छन्ति। तस्य परिचयेन विशेषलाभः स्यात् किल?" इति उक्त्वा क्षणकालानन्तरं पृष्टवान्- "भवान् एव शङ्करः तु न किल? यतः भवतः लोकज्ञानम् अपि अपूर्वम् एव" इति।

"अहं न शङ्करः। किन्तु शङ्करस्य मम च गाढमैत्री तु अस्ति एव" इति उक्तवान् शङ्करः।

"एवं वा? अस्तु तावत्। मम आगमन प्रयोजनं तु सिद्धम्। शङ्करस्य दर्शनम् इतःपरं न अपेक्षितम्" इति उक्त्वा प्रतिगन्तुम् उद्युक्तः शेखरः।

"भोः! तिष्ठतु। मम गृहम् आगत्य स्नानादिकं कृत्वा एतत् वस्त्रं क्षालयतु। नूतनवस्त्रं धृत्वा एव गच्छतु" इति उक्तवान् शङ्करः।

"मास्तु। एतेन वेषेण एव अहं मम ग्रामं गमिष्यामि। एतेन मम न काऽपि हानिः" इति वदन् शेखरः वेगेन स्वग्रामस्य मार्गम् अनुसृत्य गतवान् एव।





# स्नुषायाः शक्तिः

पूर्वं चीनादेशे कश्चन महावीरः आसीत्। सः गुणवान्, दुष्टपीडाभिः बलहीनान् रक्षति च। दुष्टशिक्षणमेव आत्मनः युक्तं कार्यम् इति चिन्तयति स्म सः।

एकदा सः महावीरः स्वखड्गं धनुर्बाणान् च स्वीकृत्य अश्वम् आरुह्य राजधानीं प्रति प्रस्थितः।

केषाञ्चित् दिनानाम् अनन्तरं प्रयाण-समये सः मार्गभ्रष्टः जातः। सूर्यास्ते जाते अपि निवासार्थं योग्यं स्थलं न लब्धम्। सर्वत्र अपि कुग्रामाः दृश्यन्ते स्म। अतः सः योधः अनन्यगत्या समीपस्थं ग्रामं गत्वा 'एषा रात्रिः अत्रैव यापनीया' इति निश्चितवान्। ग्रामं प्रविष्टवान् च।

तस्मिन् ग्रामे कस्यचित् गृहस्य एकं द्वारम् उद्घाटितम् आसीत्। गृहतः मन्दप्रकाशः आगच्छन् आसीत्। अतः योधः तस्य गृहस्य पुरतः अश्वं स्थगितवान्। अश्वात् अवतीर्य अश्वेन सह गृहस्य पुरतः विद्यमानं प्राकारं प्रविष्टवान्।

तत्र एका वृद्धा उपविष्टा एव निद्रां करोति स्म। अन्यः कोऽपि न दृष्टः। अश्वस्य खुरपुटशब्देन जागरिता सा योधं दृष्ट्वा, आगमनकारणं पृष्टवती।

"मातः, अहं मार्गभ्रष्टः। अतः भवतीं क्लेशयन् अस्मि। अस्यां रात्रौ निवासार्थं किञ्चित् स्थलं ददाति वा?" इति पृष्टवान् योधः।

"स्थलदानं मम हस्ते नास्ति भोः" इति उक्तवती चिन्तामग्ना सा वृद्धा।

"गृहस्वामी कुत्र अस्ति? किमर्थं भवती एकाकिनी अस्ति?" इति योधः वृद्धां पृष्टवान्।

"अहम् एका विधवा भोः। मम एकः एव

"चीनादेशस्य जानपदकथा"



पुत्रः। सः सर्वदा वाणिज्यनिमित्तम् अटति। कदाचित् आगच्छति" इति उक्तवती वृद्धा।

"तर्हि भवत्याः स्नुषा स्यात् किल? कुत्र अस्ति?" इति पृष्टवान् योधः।

"किमर्थं पृच्छति भोः? भाग्यवशात् सा स्त्रीजन्म प्राप्तवती। द्रष्टुं मल्लः इव अस्ति। तस्याः समानः पुरुषः एव नास्ति। तस्याः महान् कोपस्वभावः। प्रतिवचनम् अपि कुपिता भवति। अल्पप्रयत्नेन एव मां मारयितुम् शक्नोति सा। अतः एव अहं जागरूकया मौनं तिष्ठामि। तथापि सा पदे पदे मां तर्जयन्ती सर्वदा मयि कुपिता एव भवति। अतः एव भवतः अपेक्षानुसारम् स्वेच्छया उत्तरं दातुम् अशक्ता अस्मि" इति उक्तवती वृद्धा।

एतं वृत्तान्तं श्रुत्वा योधः कुपितः।

"कीदृशं विचित्रम्? कीदृशः अन्यायः! कुत्र अस्ति सा पुंश्चली? तस्याः पीडातः भवतीम् उन्मोचयामि। तस्याः उचितं दण्डनं भवेत् एव" इति उक्तवान् योधः।

अनाथाम् एतां वृद्धां रक्षितुं तेन सदवकाशः लब्धः आसीत्। सः स्वकीयम् अश्वम् एकत्र पाषाणे बध्द्वा खड्गं सज्जीकृत्य स्थितवान्।

"एतत् भवता न शक्यते भोः। मम स्नुषां भवान् न जानाति। सा जन्मना स्त्री चेदपि व्यवहारेण पुरुषायते। प्रतिदिनं सा वनं गत्वा विना आयासेन एकं मृगं हत्वा आनयति। मारितस्य मृगस्य विक्रयणेन एव वयं जीवामः। अतः एव सा कुपिता भवति चेत् मम भयम्। तस्याः सहवासः भवतः अपि मास्तु भोः" इति उक्तवती वृद्धा।

वृद्धायाः एतत् वचनं श्रुत्वा योधः खड्गं पुनः कोषे स्थापितवान्।

दुष्टपीडाभ्यः पीडितानां रक्षणार्थम् एव मम जीवनं समर्पितवान् अस्मि। इदानीं 'स्नुषाधारितं जीवनम्' इति भवती वदति। अतः अहं तां न मारयामि। उपायेन तां मार्गे आनेष्यामि। पश्यतु मम हस्तकौशलम्" इति उक्तवान् सः योधः।

किञ्चित्कालानन्तरं स्नुषा तत्र आगता।

सा आनीतं महाव्याघ्रं स्वस्कन्धेन अधः पातयित्वा 'हे वृद्धे, उत्तिष्ठतु। दीपम् आनीय एतत् नयतु' इति उक्तवती।

वृद्धा दीपम् आनीय व्याघ्रं दृष्ट्वा भीता। तं मृतं महाव्याघ्रं दृष्ट्वा योधः अपि आश्चर्यचकितः, रोमाञ्चितः च।

"एषः अश्वः कुतः आगतः?" इति स्नुषा वृद्धां पृष्टवती।

तदा योधः अग्रे आगत्य "तम् अश्वम् अहम् आनीय बद्धवान्। अहं कश्चन प्रयाणिकः। प्रयाणसमये मार्गभ्रष्टः जातः उद्घाटितं द्वारं दृष्ट्वा अद्य रात्रौ अत्र निवासार्थम् अनुमतिः लभ्येत इति आगतवान्" इति उक्तवान्।

"अतिथिः गृहम् आगतः चेत् एषा श्वश्रूः उपचारम् अकृत्वा बहिः स्थापितवती वा? भोः, अस्याः वृद्धायाः अज्ञानं क्षाम्यतु। अद्य व्याघ्रं हत्वा आनेतुं गतवत्याः मम आगमने विलम्बः जातः। भवतः आतिथ्यं समीचीनतया न जातम् इति मम खेदः" इति उक्तवती स्नुषा।

"भवती तथा न चिन्तयतु" इति उक्तवान् योधः।

तस्य दृष्ट्या सा समीचीना कुलस्त्री इव दृष्टा।

सा शीघ्रं शीघ्रं व्याघ्रमांसस्य विविधभक्ष्याणि कृत्वा उत्तमभोजनं



परिवेषितवती।

"अस्माकं भोजनं भवते रोचते वा न वा? प्रमादः जातः चेत् क्षाम्यतु" इति विनम्रतया उक्तवती च।

"तथा नास्ति। वस्तुतः भोजनम् उत्तमम् एव अस्ति" इति उक्तवान् युवकः योधः।

भोजनानन्तरं योधः स्नुषाम् उक्तवान् - "पश्यतु, एतावती बलवती भवती बुद्धिमती अपि इति चिन्तयामि। तथापि ज्येष्ठानां विषये भवत्यां श्रद्धा नास्ति किल! तस्य कारणं न ज्ञातवान् अहम्" इति।

एतत् वचनं श्रुत्वा कुपिता सा पादेन पीडितः सर्पः इव फूत्कारं कुर्वती "किम्? सा वृद्धा किं किम् उक्तवती?" इति गर्जितवती।

"त्वरा मास्तु भोः, सा मां किमपि न उक्तवती। किन्तु बुद्धिमती भवती श्वश्रूविषये तावत् गौरवं न दद्यात् वा इति चिन्तयित्वा एवं पृष्टवान्" इति उक्तवान् योधः।

सा एकस्याः शिलायाः उपरि उपविश्य तर्जन्या शिलायां रेखाः उल्लिखन्ती "एकदा एवं प्रवृत्तम्। अन्यदा एवं प्रवृत्तम्। पुनः कदाचित् एवं प्रवृत्तम्। इदानीं भवान् एव वदतु अत्र सर्वत्र कस्याः दोषः?" इति पृष्टवती। घटनात्रयं निरूपितवती च।

सा त्रिवारं तस्याः शिलायाः उपरि अङ्गुल्या रेखां लिखितवती। तेन शिलायाः उपरि तिस्रः रेखाः स्पष्टम् उल्लिखिताः आसन्।

एतत् दृष्टवतः योधस्य प्राणाः निर्गताः इव।

"इदानीम् अपि संशयः किमर्थं मातः? त्रिवाम् अपि दोषः भवत्याः श्वश्र्वाः एव" इति उक्तवान् योधः।

"समीचीनम्, अहम् अपि तथैव चिन्तयामि" इति वदन्ती स्नुषा तस्मै शयनं सज्जीकृतवती। प्रकोष्ठं गत्वा स्वयं सुप्तवती च।

'विना आयुधं व्याघ्रस्य मारणम्, अङ्गुल्या नखसाहाय्येन शिलायां रेखालेखनम् इत्यादयः महासमर्थैः अपि कर्तुं न शक्यते। एषा तु जन्मना स्त्री। तथापि एतानि कार्याणि एषा अनायासेन करोति। यदि अहं श्वः अपि अत्र स्थास्यामि तर्हि न जाने, किं किं कष्टम् अनुभोक्तव्यम् इति। सा यथा न जानीयात् तथा इतः पलायनम् एव वरम्' इति चिन्तितवान् योधः।

असहायानां रक्षणं करणीयम् इति योधस्य या आसक्तिः आसीत् सा नष्टा। अपायात् रक्षितवन्तं भगवन्तं सहस्रवारं नमस्कृतवान् सः।

अनन्तरदिने उषःकाले एव उत्थाय अश्वम् आरुह्य स्वमार्गम् अनुसृतवान्।





# मन्दबुद्धिः

**पू**र्वं कस्मिंश्चित् ग्रामे त्रयः सहोदराः आसन्। तेषु ज्येष्ठौ सहोदरौ तु व्यवहारचतुरौ। तृतीयः तु स्वभावेन मुग्धः। वञ्चनादिकं सर्वथा न जानाति। श्वेतवर्णीयं सर्वं क्षीरम् इत्येव चिन्तयति सः।

पितुः मरणानन्तरं ज्येष्ठसहोदरौ पितुः सम्पत्तिं परस्परं विभज्य स्वीकृतवन्तौ। कनिष्ठाय केवलम् एकां पेटिकां दत्तवन्तौ।

एकदा ज्येष्ठौ सहोदरौ विक्रयणवस्तूनि स्वीकृत्य विपणिं प्रति प्रस्थितवन्तौ। एतयोः गमनं दृष्ट्वा कनिष्ठः अपि गोष्ठे स्थितां धेनुं रज्ज्वा बद्ध्वा रज्जुं हस्तेन दृढं गृहीत्वा विपणिं प्रति प्रस्थितः।

सा धेनुः तस्मै पित्रा दत्ता आसीत्। धेनोः रज्जुं हस्ते स्वीकृत्य एषः अरण्यमार्गेण यदा गच्छन् आसीत् तदा कश्चन शुष्कः वृक्षः वायुना कम्प्यमानः 'कीर् कीर्' इति शब्दम् अकरोत्। मन्दबुद्धिः कनिष्ठः तं शब्दं श्रुत्वा तत्रैव स्थितवान्। वृक्षं पश्यन्- "किम् उक्तवान् भवान्? धेनुं क्रीणामि इति? पश्यतु भोः, मूल्यविषये विवादः एव नास्ति। विंशतिरूप्यकाणि दातुम् अर्हति वा भवान्? तथा चेत् एतत्क्षणे एव धेनुं दातुं सिद्धः अहम्" इति उक्तवान्।

वृक्षः पुनः अपि 'कीर् कीर्' इति शब्दम् अकरोत्। "अद्य दातुं न शक्नोमि, श्वः दास्यामि इति उक्तवान् वा भवान्? भवतु नाम। तत्र का हानिः? भवान् तु अत्र एव तिष्ठति। अहं श्वः धनं स्वीकरिष्यामि। धेनुं स्वीकरोतु तावत्" इति उक्त्वा सः मन्दबुद्धिः वृक्षे धेनुं बद्ध्वा सन्तोषेण गृहं प्रत्यागतवान्।

"किं भोः मन्दबुद्धे! भवतः धेनुः न दृश्यते! कुत्र गता सा?" इति पृष्टवन्तौ अग्रजौ।

"विंशतिरूप्यकात्मकेन मूल्येन तां विक्रीतवान्" इति उक्तवान् मन्दबुद्धिः।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"



दद्यात् तर्हि परिस्थितिः गम्भीरा भवेत्। जागरूकः भवतु'' इति उक्तवान् मन्दबुद्धिः।

गृहे अग्रजः पृष्टवान् - ''धनम् आनीतवान् वा?'' इति। ''न, प्रायः श्वः लप्स्यते। श्वः निश्चयेन आनेष्यामि'' इति उक्तवान् मन्दबुद्धिः।

''भवान् कस्मै धेनुं विक्रीतवान्?'' इति पृष्टवान् अन्यः अग्रजः।

''अरण्ये कश्चन शुष्कः वृक्षः धेनुः आवश्यकी इति उक्तवान्। मूल्यं निश्चित्य अहं दत्तवान्'' इति उक्तवान् मन्दबुद्धिः।

''हन्त! महती मूर्खता भवतः!'' इति निन्दितवन्तौ अग्रजौ। अनन्तरदिने मन्दबुद्धिः परशुं स्कन्धे संस्थाप्य अरण्यं गतवान्। शुष्कवृक्षस्य पुरतः स्थित्वा - ''अये वृक्षाधम! मम धनं ददातु तावत्। धनम् अस्वीकृत्य यत् दत्तं तत् मूर्खतायाः विषयः इति वदन्ति मम अग्रजाः। वृथा विलम्बं करोति भवान्'' इति उक्तवान् च। वृक्षः 'कीर् कीर्' इति शब्दम् अकरोत्।

''तत्तु न शक्यते एव। धनम् इदानीम् एव आवश्यकम्। अन्यथा भवन्तं छेदयिष्यामि'' इति कोपेन गर्जितवान् मन्दबुद्धिः।

वृक्षः 'कीर् कीर्' इति शब्दं विना किमपि अन्यत् न करोति।

कुपितः मन्दबुद्धिः वृक्षस्य छेदनम् आरब्धवान्। यदा त्रिचतुर्वारं प्रहारः दत्तः तदा सः शुष्कः वृक्षः सशब्दं भूमौ अपतत्।

''एवं वा? तर्हि धनं कुत्र?'' इति पृष्टवन्तौ अग्रजौ।

''श्वः सङ्गृह्य आनेष्यामि'' इति उक्तवान् मन्दबुद्धिः। 'मूर्खताम् आचरितवान् भवान्' इति निन्दितवन्तौ अग्रजौ।

अनन्तरदिने मन्दबुद्धिः प्रातःकाले एव शुष्कवृक्षस्य समीपं गतवान्। वृक्षः वायुना कम्प्यमानः 'कीर् कीर्' इति शब्दं करोति स्म। किन्तु पूर्वदिने बद्धा गौः तत्र न आसीत्।

मन्दबुद्धिः वृक्षं पृष्टवान् - ''वचनानुसारं धनं ददातु'' इति। वृक्षः पुनः अपि 'कीर् कीर्' इति शब्दम् अकरोत्। ''पुनः अपि श्वः दास्यामि इति वदति वा? तत् कथं शक्यते? ह्यः तु करुणया अङ्गीकृतम्। अद्य पुनः सः एव रागः! अस्तु तावत्। श्वः भवान् यदि न

एवम् अल्पप्रयासेन पतने कारणम् अपि आसीत्। तस्य वृक्षस्य अन्तः कश्चन कोटरः आसीत्। तत्र केचन चोराः चोरितानि आभरणानि स्थापितवन्तः आसन्। यदा वृक्षः पतितः तदा कोटरे स्थितानि आभरणादीनि मन्दबुद्धेः दृष्टिगोचराणि जातानि।

"इदानीं बुद्धिः आगता वा? ताडनं विना कार्यं च सिध्यति" इति वदन् मन्दबुद्धिः कानिचन आभरणानि कोषे स्थापितवान्, गृहं प्रत्यागतवान् च।

"एतत् सुवर्णं कथं प्राप्तवान् भवान्?" इति पृष्टवान् अग्रजः। "परशुना वृक्षं चतुर्वारं ताडितवान्। तदा वृक्षेण एतानि प्रदर्शितानि। एतोऽपि तत्र सन्ति। धेनोः मूल्यं यावत् तावत् आनीतवान् अहम्" इति उक्तवान् मन्दबुद्धिः।

अग्रजौ तत्क्षणे एव तेन सह अरण्यं गतवन्तौ। तत्रत्यानि सर्वाणि सुवर्णाभरणानि स्वीकृत्य गृहस्य मार्गम् अनुसृतवन्तौ च। मार्गे तौ मन्दबुद्धिम् उक्तवन्तौ- "भवान् तु मन्दबुद्धिः। अस्माकं समीपे एतावत् सुवर्णम् अस्ति इति कोऽपि न जानीयात्। कम् अपि न वदतु। यदि वदेत्, महत् कष्टम् आपतेत्" इति।

"अस्तु। कष्टं कस्यापि न भवेत् एव। कमपि न वदामि" इति अङ्गीकृतवान् मन्दबुद्धिः।

किञ्चिद्दूरं गमनानन्तरं तद्ग्रामीणः पुरोहितः मिलितवान्। एतान् दृष्ट्वा - "त्रयः अपि गोण्यां किमपि पूरयित्वा आनीतवन्तः




खलु? किं तत्?" इति पृष्टवान् च।

"बिम्बफलानि श्रीमन्" इति झटिति उक्तवन्तौ अग्रजौ। किन्तु मन्दबुद्धिः- "श्रीमन्। किम् असत्यकथनेन? अस्माभिः बिम्बफलानि न आनीतानि, अपि तु सुवर्णाभरणानि आनीतानि। यदि आवश्यकं, पश्यतु तावत्। अत्रत्यानि सुवर्णाभरणानि एव" इति वदन् गोणीम् उद्घाट्य प्रदर्शितवान्।

तावता प्रमाणेन सुवर्णं दृष्ट्वा पुरोहितः चकितः। अत्याशया सः गोण्यां हस्तं प्रसार्य कानिचन आभरणानि स्वीकृतवान् एव।

"अये! किम् एतत् अकार्यम्!" इति वदन् मन्दबुद्धिः परशुना पुरोहितं शिरसि ताडितवान्। पुरोहितः तत्क्षणे तत्र एव मृतः।

"हन्त! कीदृशः अनर्थः कृतः भवता!

एतेन न केवलं भवतः उपरि, अस्माकम् उपरि अपि विपत्तिः आगता।" इति खेदम् अनुभवन्तौ तौ मार्गस्य पार्श्वे गर्तं कृत्वा तत्र पुरोहितस्य शरीरं स्थापयित्वा, गर्तं मृत्तिकया पुनः पूरितवन्तौ।

मन्दबुद्धिः एतत्सर्वं पश्यन् आसीत्। एतेन पुनः अपि अपायः अस्ति एव इति ज्ञातवन्तौ अग्रजौ। अतः तद्दिने रात्रौ तौ पुनः तत् स्थलम् आगत्य पुरोहितस्य शवं गर्ततः निष्कास्य अन्यत्र गर्ते स्थापितवन्तौ। पूर्वतनगर्ते कस्यचित् अजस्य शवं स्थापितवन्तौ च।

द्वित्रेषु एव दिनेषु ग्रामे 'पुरोहितः न दृश्यते किल।' इति कोलाहलः उत्पन्नः। 'सर्वे पुरोहितस्य का गतिः जाता स्यात्?' इति चिन्तायां मग्नाः। एतत् ज्ञात्वा मन्दबुद्धिः ग्रामीणान् उक्तवान्- "अहो! भवन्तः वस्तुस्थितिं न जानन्ति। कथं वा भवन्तः जानीयुः? पुरोहितस्य शिरः मया एव परशुना भञ्जितः। मम अग्रजौ शवं गर्ते स्थापितवन्तौ। यदि विश्वासः नास्ति, तर्हि आगच्छन्तु मया सह। प्रदर्शयामि" इति। अनन्तरं ग्रामीणान् गर्तसमीपं नीतवान् च।

"पश्यन्तु, अत्रैव शवः स्थापितः" इति वदन् मन्दबुद्धिः खनित्रेण मृत्तिकाम् अपसारितवान्। "अहो! पुरोहितस्य शरीरं रोमपूर्णम् आसीत् वा? मया एतत् न लक्षितम् आसीत् एव" इति उद्गारं प्रकटितवान् च।

"पुरोहितस्य शरीरं रोमपूर्णं कथम्? सर्वथा असाध्यम् एतत्" इति उक्तवन्तः ग्रामीणाः।

"शिरसि शृङ्गद्वयम् आसीत् वा?" इति पुनः पृष्टवान् मन्दबुद्धिः।

"पुरोहितस्य शिरसि शृङ्गं कथं भोः?" इति परिहसितवन्तः ग्रामीणाः।

"मम वचने भवतां विश्वासः नास्ति! तर्हि भवन्तः एव स्वयं पश्यन्तु तावत्" इति वदन् मृतस्य अजस्य शिरः उन्नीय प्रदर्शितवान्।

इदानीं मन्दबुद्धेः वचनेषु ग्रामीणानां विश्वासः अपगतः। "एतस्य वचने विश्वासं प्रकटयन्तः वयम् एव मूर्खाः जाताः" इति वदन्तः ते ग्रामीणाः ग्रामं प्रत्यागतवन्तः।



## पक्षिणः पशवः च



# सर्प-दंशनेन मरणम्

सर्पदंशनेन प्रपञ्चे प्रतिवर्षं ४,००० जनाः मरणं प्राप्नुवन्ति। बर्मादेशे एतादृशस्य मरणस्य सङ्ख्या अधिका।

# अक्टोपस्जलचरस्य शक्तिः!

समुद्रे निवसतः अक्टोपस्जलचरस्य शरीरे द्विशताधिकाः रक्तग्राहकाः अवयवविशेषाः (suckers) भवन्ति। एतैः अवयवैः एषः जलचरः ३१० किलोभारयुतं वस्तु उन्नेतुं शक्नोति!





# महाहरिणः

अलास्काहरिणः प्रपञ्चे एव अत्युन्नतः महाहरिणः इति ख्यातः, यस्य च औन्नत्यं ७.८ फूट्मितम्, भारः च ११६ किलोग्रां मितः। एतस्य शृङ्गयोः दैर्घ्यं ७८.५ इञ्च्।

# कठिनशब्दानां सान्दर्भिका: अर्था:

अनुरोधः - Compalsion
अंशभागिनी - Partner (Fem)
आवुत्तः - Brother-in-law
उच्छिष्टम् - Leftovers
उपत्यका - Slope of a hill
कुद्दालः - Spade
केदारः - Paddy field
कोटरः - Hollow of a tree
खनित्रम् - Crowbar
गर्तः - Pit
गोष्ठः - Cattle-shed
चापः - Bow
तर्जनी - The index finger
तिरोहितः - Disappeared
तूष्णींम् - Silently
निष्ठीवनम् - Spitting
पङ्कः - Mud
परशुः - Axe
पिञ्जः - Switch (N)
पितृव्यः - Uncle
पुंश्चली - Shrew
प्रतिश्रुता - Promised
प्रतीतिः - Traditional belief
प्राकारः - Compound
बिम्बफलम् - Bimba fruit
लिपिकारः - Clerk
लोष्ठः - A lump of earth
वज्रखचितम् - Diamond-studded
वधूः - Bride
वलयः - Bracelet
वाटिका - Garden
शरभः - Mythical eight legged animal
शोभायात्रा - Procession
श्यालः - Wifes brother
सहसा - Suddenly
सिकता - Sand
सूकरः - Pig
सौचिकः - Tailor.

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां नवम्बर्-८६ मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा सप्टम्बर्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः–

**चन्दमामा (संस्कृतम्)**

७३/२, 'अक्षरम्' रङ्गरावुमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४

---

### 'जुलै' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः–

प्रथमचित्रम् - **भ्रातः, श्रुणु मे वचनं गुह्यम्।**

द्वितीयचित्रम् - **वीर, त्वं जहि शत्रुमसह्यम्।**

प्रेषकः– एच्.एस्. कृष्णस्वामी, ६०५९, के.आर्. पुरम्, हासन-५७३२०१.

---

# चन्दमामा

वार्षिकं ग्राहकशुल्कं रु. ३०.००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु-

चन्दमामा पब्लिकेषन्स्, चन्दमामा बिल्डिङ्गस्, वडपळनी, मद्रास्-६०००२६.

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# ज्वरपीडितः आसम्

| | |
|---|---|
| I – किं भोः, सप्ताहतः शालां न आगतवान्? | I say, how is it you haven't been coming to school for a week now? |
| II – ज्वरपीडितः आसम्। परह्यः ज्वरात् मुक्तः। | I was having fevèr. Only from the day before or so I am free from it. |
| I – अतः एव वा एवं कृशः जातः? परिशीलयतु आत्मानम्। बलवान् वायुः भवन्तं नयेत् अपि। | That is how you have grown thin! See, a heavy gush or wind is enough to throw you down! |
| II – पथ्यस्य परिणामः एषः। दिनत्रयं यावत् केवलं फलरसं स्वीकुर्वन् आसम्। अनन्तरदिनेषु यवागूः स्वीकृता। अतः अतीव निःशक्तताम् अनुभवामि। | It is because of dieting. For three whole days I was on mere fruit juice and had nothing but gruel later. That is why I feel terribly week. |
| I – चिकित्सा कस्य? | Who is treating you? |
| II – मम कुटुम्बवैद्यस्य एव। अतीव समर्थः वैद्यः सः। | Our family doctor! He is a very good doctor. |
| I – वातावरणे परिवर्तनं भवतः अस्वास्थ्यस्य कारणं स्यात्। | Change of weather could have been the cause of your illness. |
| II – आम्, वैद्येन अपि तथैव उक्तम्। | Our doctor, too, said so. |
| I – सर्वत्र इदानीम् एतन्निमित्तकः ज्वरः दृश्यते। | That is why, I suppose, there are many cases of fever everywhere. |
| II – आम्, आम्। चिकित्सालये अद्य दृष्टवान् यत् आगतेषु बहवः ज्वरेण पीनसेन च पीडिताः आसन्। | Of course, I saw a number of them in the clinic suffering from cold and fever. |
| I – वातावरणे पौनःपुन्येन परिवर्तनं भवति चेत् एतत्सर्वं सहजम्। | Naturally, it happens when there are weather changes frequently. |








EKCO

